### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बह्वृचब्राह्मणप्रसिद्धो नाभागो मनुपुत्र उच्यते नतस्तस्माद्दिष्ट-पुत्रादन्यः कथान्तरसूचको वा वेदसिद्धत्वाद्यशसा ततो व्याप्तो वा नाभानेदिष्ट इत्यन्यः । ततोऽन्यनाम्ना ख्यातः वेद इति शेषो वा नाभानेदिष्टं शंसतीत्यादौ प्राज्ञो मेधावी ज्येष्ठभ्रातरो ब्रह्मचारिणं विवाहानभिमुखं यविष्ठं कनिष्ठं यं नाभागं कविम् आत्मज्ञानित्वेनातिक्रान्तदर्शिनं मत्वा दायं कुलपारम्पर्येण प्राप्तविभागयोग्यं द्रव्यं व्यभजन्यदा कवेर्भागमदत्त्वा तदा स कविर्नाभागोऽव-गम्यैत्य भ्रातॄनाह ॥ १ ॥

हे भ्रातरो मह्यं किमभांक्तेति नाभानेदिष्टं वै मानवं ब्रह्म-चर्यं वसन्तं भ्रातरो निरभजन् सोऽब्रवीदेत्य किं मह्यमभांक्तेति ब्राह्मणवाक्यसूचनायाभांक्तेति पदप्रयोगः मम भागं किमर्थं विभक्तवन्तः ? मम भागः को वा कल्पित इति वा प्राक्षीदिति स एतमब्रुवन् भजान पितरं तवेति तव पितरं भज अन गच्छ "अनचेष्टायाम्" इति धातुः यदि तव विभागापेक्षा तर्हि गत्वा तं प्रसाद्य विचारय वयं ‘चामत्य पृच्छाम इत्यर्थः । एतमव निष्ठावन्तं वदितारमित्यब्रुवन् तस्माद्धाप्येतर्हि पितरं पुत्रा दिष्टावो-वदितेत्येवाचक्षत इति च निष्ठावन्तं व्यवस्थागमकं व्यवस्थापकम्, अत एवागस्य वदितारं पितरमब्रुवन्नित्यर्थः । यतो नाभागादयो निश्च-यार्थं पितरं गत्वा ब्रुवंस्तस्मादेतर्हि अद्यापि पुत्राः पितरं निर्णीय व्यवस्थापक इत्याहुरित्यर्थः । स नाभागो गत्वा भ्रातृभि-रुक्तः पितरमपृच्छत्, किमिति ? तत्राह—किं म इति । हे तत तात पितः ! मे भार्या ज्येष्ठास्तद्वस्तु अभांक्षुः किमिति पृच्छामि त्वां यदाहं प्रोषितस्तदार्यास्त्वां व्यवस्थाप्य मे भागमदत्त्वा किमर्थमभांक्षु-रिति वा त्वामन्तरेणाभांक्षुरिति त्वां हवाव मह्यं तताभांक्षुरिति स पिता प्रत्याह—मेति । हे पुत्रक ! तन्मादृथाः तस्मिन् दायविभागे आदरं मा कर्षीरिति तं पिताऽब्रवीन्मा पुत्रक तदादृथा इति ॥ २ ॥

तर्हि मम जीवनोपायः कः ? इति नाभागेन पृष्टः पिता प्रत्याह—इमइति । अद्य इमे सुमेधसः शोभनप्रज्ञा आङ्गिरसः सत्रमासते बहुकर्तृके चिरकालीने यज्ञे दीक्षितास्तिष्ठन्ति हे कवे ! ते ऋषयः षष्ठं षष्ठमहरुपेत्य तास्मिन्नहनि कर्तव्ये वैश्वदेवे विश्वदेवत्ये कर्मणि मुह्यन्ति त्वं महात्मनः तान्प्रति ज्ञातव्ये द्वे सूक्ते शंसय ब्रूहि ते आङ्गिरसः स्वः स्वर्गं यन्तो गच्छन्त आत्मनः सत्रपरिशेषितं स्वसत्रे परिशिष्टं तुष्टिसाधनं द्रव्यं ते तुभ्यं दास्यन्ते, अथ कालक्षेपमन्तरेण त्वं तान् ऋषीन् गच्छ स नाभाग आत्मने पित्रा यथोक्तं तथा कृत-वानित्यर्थः । "आङ्गिरसो वा इमे स्वर्गाय लोकाय सत्रमासते षष्ठं षष्ठमेवाहरागत्य मुह्यन्ति तानेते सूक्ते षष्ठेऽहनि शंसय तेषां यत्सहस्रं सत्रपरिवेषणं तत्ते स्वर्यन्तो दास्यन्तीति तथेति तानु-पत् प्रतिगृभ्णीत मानवं सुमेधस इति तमब्रुवन् किं कामो वद-सीतीदमेव वः षष्ठमहः प्रज्ञापयानीत्यब्रवीदथ यद्व एतत्सहस्रं सत्रपरिवेषणं तन्मे स्वर्यन्तो दत्तेति तथेति तानेते सूक्ते षष्ठेऽहन्य-शंसयत्, ततो वैते प्रयज्ञमजानन् विप्रः स्वर्गं लोकं तद्यदेते सूक्ते षष्ठेऽहनि शंसति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्या इति" हे सुमेधसः ! मानवं मां प्रतिगृभ्णीत स्वीकुरुतेति मन्त्रमुक्त्वा कस्मिन्नपि विद्यायामथास्मदपेक्षिते विद्योपदेशकामो यस्य स त्वं किं कामः युष्मदधिकविद्यावत्त्वात् द्वितीयेऽधुना नाभिमत इति तृतीय काम इत्याह—इदमेवेति । प्रथमविकल्पकामोऽपि भवामीत्या-शयेनाह. अथयदिति । सर्वयज्ञेषूपयोगमाह. तद्यदिति । अनुख्यातिः प्रकाशः ते आङ्गिरसः सत्रपरिवेषणं धनं तस्मै नाभागाय दत्त्वा स्वर्गं ययुरित्यन्वयः । "ते स्वर्यन्तोऽब्रुवन्नेतत्ते ब्राह्मण सहस्र-मितीति" हे ब्राह्मण ! वेदविद्याविशारद ॥ ३-४-५ ॥

कृष्णदर्शनः कृष्णवर्णतया प्रतीयमानः कश्चिल्लोकविलक्षणः पुरुषः रुद्रः यज्ञशालाया उत्तरदिग्भागादभ्येत्य सत्रपरिवेषणं स्वीकरिष्यन्तं नाभागमुवाच कथम् इदं वास्तवं यज्ञशालालक्षण-वास्तुभवं वसु वस्तु ममेति तदेनं समीकुर्वाणं पुरुषः कृष्ण-शस्त्रास्युत्तरत उपोत्थायाब्रवीत् मम वा इदं ममैवास्तुहमिति इति समीकुर्वाणं राशीकृत्य स्वीकुर्वाणं कृष्णशरीरवाससी वास्तुह-वास्तवं मूलभद्रभाषायां हकारवकारयोः पर्यायत्वाङ्गीका-रात् ॥ ६ ॥

मानव इति तर्हि यदि ममेदमिति वदसि ऋषिभिरिदं मम दत्तमित्याह—सोऽब्रवीन्मह्यं वा इदमदुरिति तर्हि स्म मानवे-त्युत्तरत्रापि सम्बध्यते हे मानव ! यदि त्वया प्रतिगृहीतमित्युच्यते तर्हि नौ आवयोस्ते पितरि प्रश्नः स्याद्गत्वा तं पृष्ट्वा निश्चित्य मां ब्रूहीत्युक्तः स नाभागः पितरं गतः तथा पृष्टवान् भो पितरंगिरोभि-र्दक्षिणार्थं वास्तवं मह्यं दत्तं तद्ग्रहणसमये कश्चित्पुरुष आगत्य मदीयमिदं वास्तवम् ऋषिभिर्मह्यं दत्तमिति न त्वया स्वीकर्तव्य-मित्याह अतो यथार्थं वदेति ॥ ७ ॥

नाभागेन पृष्टः पिता प्राह—यज्ञेति । कचिद्दक्षशापप्रसङ्गे ऋषयः यज्ञवास्तुगतं सर्वमुच्छिष्टमवशिष्टं रुद्राय भागं चक्रुर्हि यस्मात् स देवः सर्वमर्हति ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—१७ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

चतुर्थे नभागाख्यानमम्बरीषकथा तथा ।
दुर्वाससो जटोत्क्षेपहतापश्चक्रेण चोच्यते ॥

मनुपुत्रस्य नभगस्यापत्यं नाभागः यं गुरुकुलादधीत्य आगतं कविं विद्वांसं यविष्ठमनुजं भागार्थिनं प्रति ततं तातमेव दायं व्यभजन् वस्तुतस्तु पैतृकं किमपि धनं तदागमनात् पूर्वमेव स नैष्ठिकोऽभून्नागमिष्यतीति मत्वा सर्वधनस्य स्वैर्विभज्य गृहीतत्वा-दित्यर्थः ॥ १ ॥

तत्कथामेव प्रश्नोत्तराभ्यामाह—तत्र नाभागः पृच्छति, हे भ्रातरः ! मह्यं किम् अभांक्त व्यभजत कं भागं मदर्थं यूयं प्रकल्पितवन्तः ? भ्रातर आहुः तदानीं तव वैराग्यं श्रुत्वा भागो न प्रकल्पितः इदानीं तु तव पितरमेव भजामः त्वद्भागत्वेन पितरं प्रकल्पयामः त्वं सेवधनोपार्जकं पितरं गृहाणेत्यर्थः । ततश्च स पितरमामन्त्याह, हे तत तात ! आर्या ज्येष्ठाः मम भागं त्वाम्

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अभाङ्क्षुः मदीयो भागस्त्वमभूरित्यर्थः । किं ममार्य्यास्तताभाङ्क्षुरिति पाठे हे तात ! किमिदं ममाभांक्षुः भजाम पितरं तवेत्युक्तवन्तः आर्य्याः त्वां मह्यं किमर्थं ददुरित्यर्थः । पिता चाह, हे पुत्रक मद्तत्कस्त्वसूनो ! तैरुक्तं तत् मा आद्दथाः नह्यहं दाय इव भोगसाधनमित्यर्थः ॥ २ ॥

सरलबुद्धिना मया न पुनस्तेषां पार्श्वे गन्तव्यमिति चेत् तर्हि स्नेहेन तव जीवनोपायमहमेवोपदेक्ष्यामीत्याह—इमे इति सपादाभ्यां द्वाभ्याम् । अभिप्लवः षडहो भवतीति विहितेषु षडहेषु आवर्त्यमानेषु षष्ठं षष्ठमहः कर्मोपेत्य प्राप्य कर्मणि तदनुष्ठाने सुमेधसोऽपि सूक्तविशेषाज्ञानेन मुह्यन्ति हे कवे विद्वन् ॥ ३ ॥

तान् महात्मनोपि "इदमित्थारौद्रम्" इति च "ये यज्ञेन दक्षिणाया" इति च त्वं वैश्वदेवे द्वे सूक्ते शंसय पाठय ततश्च ते स्वर्यन्तः स्वर्गं गच्छन्तः तथेति शुकवाक्यम् ॥ ४।५॥

पुरुषः श्रीरुद्रः कृष्णादर्शनः श्यामवर्णः यद्वा स्फूर्तिप्राप्तं कृष्णां सदा पश्यन्तीति सः वास्तुकं यज्ञवास्तुगतम् ॥ ६ ॥

तर्हि तदेव ममेदमिति मानवो नाभाग उवाच पुनश्च रुद्र उवाच नौ अवयोरस्मिन् विवादे ते पितरि प्रश्नः स्यात् पृष्टवानिति शुकोक्तिः ॥ ७ ॥

पिता उवाच—यज्ञेति । क्वचिदिति दक्षाध्वरे "उच्छेषणभागो वै रुद्रः" इति श्रुतेश्च किञ्च स देव ईश्वरः सर्वमप्यर्हति किम्पुनर्यज्ञावशिष्टमित्यर्थः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मनुपुत्रस्य नभगस्य नाभागो निष्कपटः पुत्रो जातस्तस्य अम्बरीषो महाभागवतः पुत्रोऽभूदिति नाभाग इति चतुर्थेन वर्णयति—नभगस्य बहवः पुत्रा जाताः तेभ्यः पश्चान्नाभागोऽपत्यमभूदित्याह—नाभागो नभगापत्यमित्यादिना—यं नाभागं ब्रह्मचारिणं बहुकालं विद्यालाभार्थं गुरुसमीपे वसन्तं नैष्ठिकोऽयमिति मत्वा भ्रातरः पितृवित्तं सर्वं विभज्य गृहीत्वा पश्चात्कविं प्राप्तविद्यं गुरुसमीपादागतं भागार्थं अविष्टं कनयांसं प्रति ततं पितरं नभगं दायं भागं व्यभजन् ॥ १ ॥

एतदेव प्रश्नप्रतिवचनाभ्यां प्रपञ्चयति, भ्रातर इति । तत्र नाभाग आह—हे भ्रातरः ! मह्यं किमभाङ्क्त व्यभजत ते आहुः तदा विस्मृतोऽस्माभिस्तव भागोऽधुना तव पितरं भजाम विभजाम, स पितरमाह—हे तत ! हे पितः ! आर्याः त्वां मम अभाङ्क्षुः मम भागं चक्रुः पिताऽऽह तत् तैरुक्तं हे पुत्रक ! मा आद्दथाः न हि अहं वित्तविभागवत् तव भोग इत्यर्थः ॥ २ ॥

एवमुक्त्वापि तस्य जीविकोपायमाह—इमे इति सपादद्वयेन । हे कवे विद्वन् ! इमे समीपगाः आङ्गिरसः सत्रम् आसते अनुतिष्ठन्ति तत्र अभिप्लवः षडहोभवति पृष्ठ्यः षडहो भवतीति विहितेषु षडहेष्वावर्त्यमानेषु षष्ठं षष्ठमहः कर्मोपेत्य प्राप्य कर्मणि तदनुष्ठाने सुमेधसः सुबुद्धयोपि ते सूक्तविशेषापरिज्ञानान्मुह्यन्ति ॥ ३ ॥

महात्मनोपि तान्प्रति "इदमित्थारौद्रम्" इति च "ये यज्ञेन दक्षिणाया" इति च वैश्वदेवे द्वे सूक्ते शंसय ब्रूहि ततः कर्मणि समाप्ते सति ते स्वर्यन्तः स्वर्गं गच्छन्तः सत्रपरिशेषितं स्वसत्रावशिष्टम् आत्मनो धनम् ॥ ४ ॥

दास्यन्ति तुभ्यमिति शेषः अथ तस्मात् गच्छ स नाभागः तथा पितृवाक्यानुसारेण यथावत्कृतवान् ते आङ्गिरसोऽपि सत्रपरिशेषितं धनं तस्मै दत्वा स्वर्गं ययुः ॥ ५ ॥

तं नाभागं कृष्णमञ्जनप्रभं दृश्यते इति दर्शनं शरीरं यस्य सः श्रीरुद्रः वास्तुकं यज्ञभूमिगतं वसु धनं ममेत्युवाच ॥ ६ ॥

नाभाग आह—ममेदमृषिभिर्दत्तमिति, रुद्र आह हे मानव ! तर्हि स्म स्यान्नौ ते पितरि प्रश्न इति नाभागोऽपि तथा पितरं पृष्टवान् ॥ ७ ॥

तत्पिता आह—ऋषयः क्वचिद्दक्षाध्वरे यज्ञवास्तुगतं यज्ञभूमिगतम् उच्छिष्टमुर्वरितं रुद्राय भागं चक्रुः अतः स देवः सर्वमर्हति "उच्छेषणभागो वै रुद्रः" इति श्रुतेः ॥ ८—९ ॥

---

भाषा टीका ।

श्रीरुक्मिणीरामानुजौ जयतः
श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—नभग के पुत्र नाभाग हुए जिन नाभाग को बहुत काल पर्यन्त ब्रह्मचर्य से गुरुकुल में वास करने से नैष्ठिक ब्रह्मचारी जानकर भ्राता लोगों ने धन के विभाग करते समय उनका भाग नहीं लगाया, जब कुछ दिन पीछे गुरु कुल से आये और भ्राताओं से अपना भाग माँगा तब सब भाइयों ने इनको छोटे जानकर इनके हिस्से में पिता को देदिये ॥ १ ॥

उस समय नाभाग ने भाइयों से पूँछा, कि—हे भ्राता ओं ! आपने हमको हिस्से में क्या दिया, तब भ्राता लोग बोले, कि—हमलोगों ने तुमको तुमारे भाग में पिताजी कोदिये । तब नाभाग पिता के पास जाकर बोले, कि—हे पिता जी ! बडे भाइयों ने हमारे हिस्से में तुमको दिये हैं तब पिता बोले, कि—हे पुत्र ! उनके उस खोटे कहने पर आदर न करो उन्हों ने तो केवल प्रतारणा ( ठगई ) करी है, क्योंकि ? मैं कुछ धनादि के सदृश भाग का वस्तु नहीं हूँ ॥ २ ॥

हे पुत्र ! तौभी कुछ चिन्ता नहीं, तुम देखो आंगिरस ब्राह्मण लोग अबही यहां यज्ञ करते हैं और हे कवे ! ये लोग बडे बुद्धि वाले हैं तौभी वे जिनका जो अभिप्लव कर्म है उस में छटवें दिन का सूक्त भूलजाने से जब २ छटवें दिन का कर्म उपस्थित होता है तब २ वे लोग उस कर्म में मोहित होते हैं ॥ ३ ॥

वहां जाकर उस समय पर जो वे लोग दोसूक्त विश्वेदेव सम्बन्धि भूलें उनको तुम बोलदेना तब वे लोग स्वर्ग के जाने वाले अपने यज्ञ में बचे हुये धनको तुम को दे जांयगे ॥ ४ ॥

नाभागस्तं प्रणम्याह तवेश ! किल वास्तुकम् ।
इत्याह मे पिता ब्रह्मन् ! शिरसा त्वां प्रसादये ॥ ९ ॥
यत्ते पिताऽवदद्धर्मं त्वं तु सत्यं प्रभाषसे ।
ददामि ते मन्त्रदृशे ज्ञानं ब्रह्मसनातनम् ॥ १० ॥
* ( तस्मादसत्यं न ब्रूयात् परस्वं चापदि क्वचित् ।
सत्येन परिसन्तुष्टो भवामिष्टस्स मे भवेत् ) ॥ ० ॥
गृहाण द्रविणं दत्तं मत्सत्रे परिशेषितम् ।
इत्युक्त्वाऽन्तर्हितो रुद्रो भगवान् सत्यवत्सलः ॥ ११ ॥
य एतत्संस्मरेत्प्रातः सायं च सुसमाहितः ।
कविर्भवति मन्त्रज्ञो गतिं चैव तथात्मनः ॥ १२ ॥
नाभागादम्बरीषोऽभून्महाभागवतः कृती ।
नास्पृशद्ब्रह्मशापोऽपि यं न प्रतिहतः क्वचित् ॥ १३ ॥

राजोवाच ।

भगवञ्छ्रोतुमिच्छामि राजर्षेस्तस्य धीमतः ।
न प्राभूद्यत्र निर्मुक्तो ब्रह्मदण्डो दुरत्ययः ॥ १४ ॥

श्रीशुक उवाच ।

अम्बरीषोमहाभागः सप्तद्वीपवतीं महीम् ।
अव्ययां च श्रियं लब्ध्वा विभवं चातुलं भुवि ॥ १५ ॥
मेने ऽतिदुर्लभं पुंसां सर्वं तत्स्वप्नसंस्तुतम् ।
विद्वान्विभवनिर्वाणं तमो विशति यत्पुमान् ॥ १६ ॥

भाषा टीका ।

इतना कह कर पिता ने कहा कि–लौ अब तुम वहां जाओ । बस इतना सुनकर नाभाग ने भी वहां जाकर जैसा पिता ने सिखाया रहा वैसाही किया, वे आंगिरस ब्राह्मण लोगभी यज्ञ के अन्त में यज्ञ में बचे हुए धनको नाभाग के लिये दे कर स्वर्ग को चल गये ॥ ५ ॥

यज्ञावशिष्ट उस धनको नाभाग के स्वीकार करते समय उत्तर दिशा से एक काले वर्ण का पुरुष आकर बोला, कि यह यज्ञा वशिष्ट वास्तुक द्रव्य तो हमारा है ॥ ६ ॥

तब उस पुरुष से नाभाग बोला, कि हमको यह ऋषियों ने दिया है । तब वह पुरुष नाभाग से बोला, कि–अच्छा तो हमारे तुमारे इस विवाद में तुमारे पिताही से तुम पूछो तब नाभागने भी पिता के समीप जाकर प्रश्न किया ॥ ७ ॥

पिताने कहा कि पाहिले ऋषि लोगों ने दक्ष के यज्ञ में, यज्ञवास्तुगत यज्ञ का उच्छिष्ट जो कुछ है उसका भाग श्रीरुद्र के लिये किया है इस लिये वही श्रीरुद्रदेव यज्ञ का उच्छिष्ट सर्व वस्तु लेने के योग्य हैं ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीरुद्र आह यत्त इति ॥ १० ॥

इदमाख्यानं श्रुतिप्रसिद्धम् तथाहि वहवृचब्राह्मणम् "नाभाने-

* श्लोकोऽयमधिकः पठ्यते वीर० रीत्या ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

दिष्टं शंसति नाभानेदिष्टं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्सोऽब्रवीत्" इत्यादि ॥ ११ ॥

अस्याख्यानस्य स्मरणे फलमाह—य एतदिति । आत्मनो गतिं च प्राप्नोतीति शेषः ॥ १२ ॥

क्वचिदपि न प्रतिहतो ब्रह्मशापोऽपि ब्राह्मणेन दुर्वाससा निर्मितः कृत्यानलोऽपि यं नास्पृशत् अतोऽसौ महाभागवतोऽतएव कृती पुण्यवान् ॥ १३ ॥

तस्य श्रोतुमिच्छामि चरितमिति शेषः । ब्रह्मदण्डः कृत्यानलो न प्राभून्न समर्थो बभूव ॥ १४ ॥

श्रियं सम्पदम् विभवमैश्वर्यम् अतुलं निरुपमम् ॥ १५ ॥

पुंसामतिदुर्लभमपि तत्सर्वं स्वप्नवत्संस्तुतं निरूपितमनुपादेयं मेने. तत्र हेतुः, विभवस्य निर्वाणं नाशं विद्वान् यद्येन विभवेन तन्नाशेन वा पुमांस्तमो विशति मोहे निमज्जति ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ततो नाभागः पितुर्वच आकर्ण्य वास्तुकं वसुग्रहणार्थमुपायान्तरमपश्यत्, रुद्रं प्रणम्येदमाह—किं हे ईश ! यद्यपि मे पिता वास्तुकं वसु तवैव त्वत्सम्बन्ध्येवेत्याह—तथापि; हे ब्रह्मन् ! शिरसा त्वां प्रार्थये प्रणतेन शिरसा त्वां वास्तुकवसुप्रदानाय प्रसन्नङ्कुर्य्यामिति वदन् प्रणतो बभूव ॥ ९ ॥

ततो रुद्र आह—यदिति । यद्यस्मात्ते तव पिता धर्ममेवाह तथा त्वमपि सत्यमेव प्रभाषसे तत्तस्मान्मन्त्रदृशे वैश्वदेवमन्त्रद्रष्ट्रे ते तुभ्यं सनातनं ब्रह्म ब्रह्मविषयकं ज्ञानं ददामि ॥ १० ॥

तथा यद्यज्ञपरिशेषितं द्रविणं मया दत्तं गृहाण द्वादशाहस्य सत्रत्वाद्यागत्वाच्च यज्ञवास्तुगतं यत्सत्रपरिशेषितमिति यज्ञसत्रपदयोः प्रयोगः इतीत्थमुक्त्वा भगवान् सत्यवत्सलः सत्यभाषणनिमित्तवात्सल्ययुक्तो रुद्रः तत्रैवान्तर्दधे ॥ ११ ॥

एतदाख्यानसंस्मरणफलमाह—यः पुमानेतदाख्यानं प्रातः सायञ्च समाहितचित्तः संस्मरेत्स कविः शास्त्रजन्यज्ञानी भवति मन्त्रज्ञश्च भवति तथा आत्मनः स्वस्य परस्य च गतिं याथात्म्यं च वेदेति शेषः ॥ १२ ॥

एवं नाभागवृत्तान्तमभिधायाथ तत्पुत्रं तच्चरित्रं चाह—नाभागादित्यादिना यावत्पञ्चमाध्यायसमाप्ति । नाभागादम्बरीषः संबभूव स च महाभागवतः कृती सापराधेष्वप्युपकारकरणशीलः विशेषेण तच्चरित्रप्रश्नावसरप्रदानाय सङ्क्षेपेण तद्वृत्तं वदन् तं विशिनष्टि, नास्पृशदित्यर्द्धेन । क्वचिदपि न प्रतिहतः प्रतिहतिशून्यो विप्रशापोपि यमम्बरीषं नास्पृशत् यद्यपि दुर्वासा न तस्मै शापं ददौ नाप्युक्तकृत्य जटोत्पादितकृत्यायाः शापरूपत्वं तथापि शापवत्कृत्यायास्तन्निग्रहार्थत्वात्कृत्यायां शापशब्द औपचारिको द्रष्टव्यः ॥ १३ ॥

एवमुक्ते लब्धप्रश्नावसरः पृच्छति राजा—भगवन्निति । हे भगवन् ! राजर्षेर्धीमतस्तस्याम्बरीषस्य श्रोतुमिच्छामि चरित्रमिति शेषः । यत्राम्बरीषे विनिर्मुक्तः प्रयुक्तो दुरत्ययोपि ब्रह्मदण्डः कृत्यारूपो न प्राभूत् न समर्थो बभूव तं बाधितुमिति शेषः ॥ १४ ॥

एवमापृष्टो ब्रह्मदण्डस्याप्रभुत्वमाचिख्यासुस्तावत्तस्य महाभागवतः कृतीत्युक्तं महाभागवतत्वं प्रपञ्चयति—अम्बरीष इत्यादिना आरिराधयिषुरित्यतः प्राक्तनेन ग्रन्थेन । अम्बरीषो महाभागः श्रीमानतएव सप्तद्वीपयुक्तां महीमव्ययां निरुपद्रवां श्रियं सम्पदम् अतुलमसमानमनितरसाधारणं विभवं भोग्यभोगोपकरणादिसमृद्धिमैश्वर्यं वेत्येतत्सर्वमितरेषां दुःखेनापि लब्धुमशक्यं लब्ध्वापि विभवनिर्वाणं विभवस्य निर्वाणमवसानं नाशं विद्वान् तत्सर्वं स्वप्नसम्मितं स्वाप्नवस्तुतुल्यं मेने हेयममन्यतेत्यर्थः । तत्र हेतुः यद्यस्मात् विभवसङ्गात् पुमान् तमो नरकं विशति ॥ १५ ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मया त्वविचार्योक्तमित्युक्तो नाभागो गत्वा तं रुद्रं प्रणम्याह—हे ईश ! वास्तुगतं तव किलेति मे पिता प्राह, तस्मादहं शिरसा त्वां प्रसादये क्षमस्वेति वाचा स नाभागः प्रत्याह ॥ ९ ॥

स पुरुषो नाभागं प्रत्याह—यत्त इति । ते पिता सत्यलक्षणं धर्ममवदत् त्वं च सत्यं यथा तथ्यं वदसीति यत्तस्मान्मन्त्रदृशः वैश्वदेवसूक्तं दृष्टवतः ते तव सनातनं सदातनं वेदप्रमाणकं वा ब्रह्मनिरपेक्षम् अन्योपदेशाकांक्षारहितं ब्रह्मविषयं वा ज्ञानं ददामि ॥ १० ॥

किञ्च यत्सत्रपरिवेषितं द्रविणं तच्च ददामि गृहाण तमब्रवीत् तद्वै नौ तवैव पितरि प्रश्न इति स पितरमेनं पिता अब्रवीन्नन्वु ते पुत्रकादुरित्युरेवम् इत्यब्रवीत्तिन्तु मे पुरुषः "कृष्णाशवास्युत्तरत उपोदतिष्ठन्मम वा इदं ममैवास्तुहमित्यादितेति तं पिताऽब्रवीत्तस्यैव पुत्रक तत्तत्तु स तुभ्यं दास्यतीति स पुनरेत्याब्रवीत् तव ह्वाव किल भगव इदमिति मे पिताहेति सोऽब्रवीत्तदहं तुभ्यमेव ददामि य एवं सत्यमवादीः" इति । तस्मादेवं विदुषां सत्यमेव वेदितव्यमिति हे पुत्रक ! तेङ्गिरसस्तवार्त्तुर्नेनु दत्तवन्त एव किमिति पृष्टे स नाभागः म अतुरेव न तत्र सन्देह इत्यब्रवीत् तर्हि किमत्र बाधकमिति तत्राह तत्तु म इति सत्रपरिवेषितं यद्धनं तदिदं ममैवेत्युक्त्वा पिता दत्तवान् स्वीकृतवानित्यर्थः । इत्युक्ते पिता नाभागं प्रत्याह तं पितेति ॥ ११ ॥

फलमाह—य एतदिति । कविस्तत्त्वविज्ञानी मन्त्रज्ञः ऋग्वेदतात्पर्यार्थज्ञानी आत्मनः स्वपरलक्षणस्य वस्तुनो गतिं स्थितिं ज्ञानं वा प्राप्नोतीति शेषः " स एव सहस्रसनिर्मन्त्रोयं नाभानेदिष्ठमुपैनं सहस्रं नमति प्रपष्ठेनाह्ना स्वर्गं लोकं जानाति य एवं वेद" इत्यनेनापि फलश्रुतेरर्थः सूचित इति । यद्वा नाभानेदिष्टः सहस्रसनिः "धनस्य सम्भक्तौ" इति धातोः सहस्रेत्युपलक्षणमनेकजनाय धनदाता "सन लाभे" इतिधातोरनेक

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

विषयज्ञानलाभोपेतः मन्त्रो मन्त्रज्ञानी पुरुषः एवमुक्तमिति-हासार्थं वेद एनं पुरुषमुद्दिश्य सहस्रम् उपनमति षष्ठेनाह्ना षष्ठ-दिनापेक्षितसूक्तपूर्वककृतकर्मणा, स्वर्गं सुखं ज्ञानात्मकं लोकं सर्वाधारं हरिं प्रजानातीति भावः ॥ १२ ॥

कृतं पूर्णं ब्रह्मास्यास्तीति कृती सुकृती वा चक्रेण सुदर्शन-नाम्ना प्रतिहतो निरस्तः ॥ १३ ॥ १४ ॥

प्रथमतस्तस्य विरक्तिमाह—अम्बरीष इति । मह्यादिकं तत्सर्वं स्वप्नसंमितं स्वप्नवदनित्यं मेन इत्यन्वयः । अव्ययां दीर्घ-कालीनां विभवं हिरण्यादिलक्षणाम् अनेनाम्बरीषशब्दार्थोऽपि सूचितः स आविष्करिष्यते अम्बरादिकं रीषं नश्वरमिति ज्ञान-मस्यास्तीत्यम्बरीषः "रुषरिषहिंसायाम्" मत्वर्थे अच्प्रत्ययः अम्बर-वदीषा इच्छा यस्य स तथा आकाशवद्बहुलज्ञान इत्यर्थः व्यत्यासश्छान्दसः अं ब्रह्म तस्य वरिवैरया तत्रेच्छा यस्य स तथा ॥ १५ ॥

एतदेव स्पष्टयति विद्वानिति । विभवनिर्वाणं हिरण्यादि-सम्पदां नाशं क्षणिकं विद्वान् पुमान्यद्यस्माद्विभवान्मुग्धस्तमो विशति ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

शिरसा प्रणम्य ॥ ९ ॥

रुद्र उवाच-यत्ते इति । इदं चाख्यानं श्रुतिप्रसिद्धं तथाच बहूवृचब्राह्मणे "नाभानेदिष्ठं शंसतीत्यादि ॥ १०-११ ॥

गतिं च प्राप्नोतीति शेषः ॥ १२ ॥

यो ब्रह्मशापः कचिदपि न प्रतिहतः अमोघत्वात् सोऽत्र त्वा-मसौदद्दास्त्विति वाग्वज्रसहितकृत्यानलप्रक्षेपरूपे ज्ञेयः ॥ १३ ॥

श्रोतुं चरितमिति शेषः ॥ १४ ॥

पुंसामतिदुर्लभं विभवं च लब्ध्वा तत्सर्वं स्वप्ने संस्तुतमिव मेने यतो विभवस्य निर्वाणं नाशं विद्वान् यत् यतो विभवा-सक्तः ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

रुद्र आह-यदिति । मन्त्रदृशे मन्त्रद्रष्ट्रे ते तुभ्यं ब्रह्म बृहत् सनातनं वेदसिद्धं ज्ञानं ददामि ॥ १० ॥ ११ ॥

आत्मनो गतिम् आत्मविद्यामित्यर्थः । प्राप्नोतीति शेषः ॥ १२ ॥

कृती पुण्यवान् कचिदपि न प्रतिहतो न निराकृतः ब्रह्म-शापो ब्राह्मणनिर्मितः कृत्यानलरूपः शापः यं नास्पृशत् ॥१३॥

यत्राम्बरीषे निर्मुक्तः ब्राह्मणप्रयुक्तो प्रचण्डः कृत्यानलः न प्राभूत् न समर्थो बभूव तस्य श्रोतुमिच्छामि चरित्रमिति शेषः ॥ १४ ॥

सप्तद्वीपवतीं महीं श्रियं सम्पदं विभवमैश्वर्यम् अतुलम् अनु-पमम् ॥ १५ ॥

पुंसां दुर्लभमपि तथापि यतः पुमान् तमो विशति तत् सर्वं स्वप्नवदनित्यतया संस्तुतं निरूपितं मेने यतो भवनिर्वाणम् ऐश्वर्य नाशं विद्वान् यद्वा विगतो भवः संसारो यतः स विभवो वासुदेवस्तस्माद्भजनीयान्निर्वाणं मोक्षं विद्वान् ॥ १६ ॥

---

### भाषाटीका।

नाभाग इतना पिता का वचन सुनकर फिर श्रीरुद्र के समीप जाकर प्रणाम कर बोला, कि हे ईश ! हमारे पिताने कहा है यज्ञ शेष वस्तु सब आपही का है तस्मात् हे ब्रह्मन् ! आपको मैं शिर से प्रणाम करि प्रसन्न करता हूं कि आप मेरा अपराध क्षमा करें ॥ ९ ॥

तब श्रीरुद्र बोले, कि—जो तुमारे पिता ने धर्म ही कथन किया और तुम भी सत्य बोलते हो इसी कारण मंत्र द्रष्टा ऐसे तुमारे लिये अब हम सनातन ब्रह्म विषयक ज्ञान देते हैं ॥ १० ॥

और यज्ञ में बचा हुआ यह जो हमारा द्रव्य है इसको भी तुम ग्रहण करो । सत्य वत्सल भगवान् श्रीरुद्र इतना कहकर अन्त-र्ध्यान होगये ॥ ११ ॥

जो पुरुष इस आख्यान को सावधान होकर प्रातःकाल सायं-काल स्मरण करता है वह कवि ( ज्ञानी ) होता है और मंत्रज्ञ होता है और अपने आत्मा की गति को भी प्राप्त होता है ॥ १२ ॥

उसनाभाग से अंबरीष महाराज हुए जो बडे सुकृती और महा भागवत हुए । जिनको ब्रह्म शापने भी स्पर्श नहीं किया, जो कि—ब्रह्म शाप कहीं भी प्रति हत ( व्यर्थ ) नहीं भया ॥१३॥

राजोवाच ॥

राजापरीक्षित बोले, कि—हे भगवान् ! परमज्ञानी उन राजर्षि श्रीअंबरीष के चरित्र के श्रवण करने की इच्छा करता हूं-कि जिसके ऊपर दुरत्यय ब्रह्मदंड का भी प्रभाव न चला ॥ १४ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि-हे राजन् ! महाभाग अंबरीष सप्त-द्वीपवती पृथिवी अचल श्री और अतुलविभव को प्राप्त होकर भी उस सबको स्वप्न सदृश मानते हुए, जो वैभव पुरुष को अति दुर्लभ है, क्योंकि वैभव के परिणाम को जानते रहे, कि-जिसके कारण से पुरुष नरकादि में प्रवेश करता है ॥ १५-१६ ॥

वासुदेवे भगवति तद्भक्तेषु च साधुषु ।
प्राप्तो भावं परं विश्वं येनेदं लोष्ट्रवत्स्मृतम् ॥ १७ ॥
स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥ १८ ॥
मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् ।
घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते ॥ १९ ॥
पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने ।
कामं च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः ॥ २० ॥
एवं सदा कर्मकलापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे ।
सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहितः शशास ह ॥ २१ ॥
ईजेऽश्वमेधैरधियज्ञमीश्वरं महाविभूत्योपचिताङ्गदक्षिणैः ।
ततैर्वसिष्ठासितगौतमादिभिर्धन्वन्यभिस्रोतमसौ सरस्वतीम् ॥ २२ ॥
यस्य क्रतुषु गीर्वाणैः सदस्या ऋत्विजो जनाः ।
तुल्यरूपाश्चानिमिषा व्यदृश्यन्त सुवाससः ॥ २३ ॥
स्वर्गो न प्रार्थितो यस्य मनुजैरमरप्रियः ।
शृण्वद्भिरुपगायद्भिरुत्तमश्लोकचेष्टितम् ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वेवं जानन्तोऽपि विभवैषिणो दृश्यन्ते, तत्राह—वासुदेवइति । भावं भक्तिं प्राप्तः येन भावेनेदं विश्वं लोष्टवदिति तुच्छं स्मृतम् ॥ १७ ॥

भक्तिमेव सर्वेन्द्रियाणां भगवत्परत्वकथनेन प्रपञ्चयति–सवा इति त्रिभिः । श्रुतिं श्रोत्रमच्युतस्य सत्कथानामुदये श्रवणे चकारेत्यस्य सर्वत्रान्वयः ॥ १८ ॥

मुकुन्दस्य लिङ्गानामालयानि स्थानानि तेषां दर्शने दृशौ नेत्रे श्रीमत्याक्तुलस्यास्तत्पादसरोजेन यत्सौरभं तस्मिन् तदर्पिते तस्मै निवेदिताम्नादौ ॥ १९ ॥

कामं स्रक्चन्दनादिसेवां दास्ये निमित्ते तत्प्रसादस्वीकाराय न तु कामकाम्यया विषयेच्छया, कथं चकार ? उत्तमश्लोकजनाश्रया रतिर्यथा भवेत्तथा, अनेन तद्भक्तेषु च परमभावं प्राप्त इत्येतत्स्फुटीकृतम् ॥ २० ॥

सर्वश्चाऽऽत्मेति भावो भावना यस्मिंस्तमात्मनः स्वस्य कर्मणां कलापं समूहं भगवति विदधत्समर्पयंस्तन्निष्ठैर्भागवतैर्विप्रैरभिहितः शिक्षितस्सन् महीं शशास पालयामास अनेनाधिकृतो धर्मोऽपि यथावद्दर्शितः ॥ २१ ॥

किं च यज्ञाधिष्ठातारमीश्वरमश्वमेधैरीजे आराधयामास महाविभूत्योपचितान्यङ्गानि दक्षिणाश्च येषु तैः वसिष्ठादिभिर्हेतुभूतैस्ततैर्विस्तृतैः धन्वनि धन्वदेशे निरुदके सरस्वतीमभिस्रोतम् तस्याः प्रतिलोमामित्यर्थः ॥ २२ ॥

किं च यस्य क्रतुषु सदस्यादयो गीर्वाणैः सह भूषणादिभिस्तुल्यरूपा व्यदृश्यन्त स इत्थमिति चतुर्थेनान्वयः न च देवानां निमेषाभावाद्वैलक्षण्यं यतोऽनिमिषाश्च व्यदृश्यन्त न निमिषन्तीति तथा आश्चर्यदर्शनौत्सुक्येन तेषां निमेषोपरमादिति भावः ॥ २३ ॥

यस्य यदीयैर्मनुजैरपि स्वर्गो न प्रार्थितस्तस्य तु का वार्ता॥२४॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलं विरक्तो बभूव अपितु भगवति वासुदेवे तद्भक्तेषु साधुषु लक्षणलक्षितेषु च परमभावं भक्त्यात्मकमभिप्रायं गतः प्राप्तः,भावं विशिनष्टि,येन भावेनेदं विश्वं लोष्टवदनुपादेयममन्यतेत्यर्थः ॥ १७ ॥

वासुदेवे परं भावं गत इत्येतदेव प्रपञ्चयति–सवा इति । ताम्रमनुष्यदेहस्य सर्वविधभगवत्सेवोपयुक्ततामावेद्य तथैव कृतवान्

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्याह—स वा इति त्रिभिः । स वै अम्बरीषः वै शब्दः प्रसिद्धिद्योतकः मनः कृष्णस्य भगवतः पदारविन्दयोश्चकार तच्चिन्तनप्रवणमकरोदित्यर्थः । वैकुण्ठस्य गुणानामनुवर्णने वचांस्यकरोत् गुणवर्णनप्रवणान्येवाकरोदित्यर्थः । एवमुत्तरत्रापि द्रष्टव्यं भगवन्मन्दिरमार्जनादिषु व्यापारेषु हस्तावकरोत् आदिशब्देनाराधनादीनां सङ्ग्रहः अच्युतानां सत्कथानां पुण्यावहानां भगवत्कथानां पुण्यप्रदानामुदये श्रवणे श्रुतिं श्रोत्रेन्द्रियं चकार ॥ १८ ॥

मुकुन्दस्य लिङ्गानि विग्रहा आलयाः स्थानानि च तेषां दर्शने दृशौ नेत्रे चकार तस्य मुकुन्दस्य ये भृत्यास्तेषां गात्राणां स्पर्शने निमित्ते अङ्गसङ्गं स्वाङ्गस्य यत्किञ्चिद्वस्तुसंस्पर्शं मुकुन्दभक्तगात्रं चेत् पस्पर्श नेतरदित्यर्थः । श्रीमत्याः तुलस्याः मुकुन्दपादसरोजेन यत्सौरभं तत्पादसरोजसम्बन्धेन यत्सौरभं तस्मिन् घ्राणेन्द्रियं चकार तदर्पिते मुकुन्दाय निवेदितेऽन्नादौ रसनाम् ॥ १९ ॥

हरेः क्षेत्राणि वेङ्कटाद्र्यादीनि तेषां पन्थानो मार्गाः क्षेत्रपथाः "ऋक्पूरब्धूः" इति समासान्तोऽप्रत्ययः तेष्वनुसर्पणे गमने पादौ हृषीकेशपदयोरभिवन्दने शिरो मूर्धानं कामं तदर्पितस्रक्चन्दनादिभिः सेवां दास्ये निमित्ते चकार तत्प्रसादस्वीकारस्तद्दास्यार्थमेव न तु कामकाम्यया विषयेच्छया कृत इत्यर्थः । सर्वमेतत्कथं चकार? उत्तमश्लोकजना भगवद्भक्तास्तदाश्रया रतिः तत्पर्यन्ता रतिर्भक्तिर्यथा भवेत् तथा चकारेत्यर्थः । तथेति पाठे उत्तमश्लोकजनविषया रतिश्च तस्याभवदित्यर्थः । अनेन तद्भक्तेषु च परम्भावकृत इत्येतत्प्रपञ्चितम् अतो न पौनरुक्त्यम् ॥ २० ॥

एवं सर्वात्मभावं सर्वात्मना करणत्रयेण भावो भावना यस्मिन् तं कर्मकलापमधियज्ञे यज्ञनिर्वाहके भगवति विदधत्समर्पयन् कर्मसमूहस्य भगवदाराधनरूपतामनुसन्दधदित्यर्थः । यद्वा, एवंविधं कर्मकलापं भगवति सर्वात्मभावं सर्वस्यान्तरात्मत्वानुसन्धानं च विदधत् कुर्वन् भगवन्निष्ठैर्विप्रैर्वसिष्ठादिभिरभिहितः एवं कुर्वेवं माकार्षीरित्येवमुक्त इमां महीं सप्तद्वीपवतीं शशास पालयामास ॥ २१ ॥

एवं महाविभूत्या उपचितानि बहूकृतानि अङ्गानि दक्षिणाश्च येषु तैरश्वमेधैर्वसिष्ठादिभिर्हेतुभूतैस्ततैर्विस्तृतैराराधयामास धन्वन् धन्वनि निरुदके देशे विभक्तिलोप आर्षः निरुदकात्तस्माद्देशादभिस्रोतं प्रवाहाभिमुखं यथा भवति तथा यष्टुं सरस्वतीं नदीमगादित्यर्थः ॥ २२ ॥

तेनानुष्ठितानश्वमेधान् विशिनष्टि—यस्येति । यस्याम्बरीषस्य क्रतुषु अश्वमेधेषु सभ्या ऋत्विजश्च जना गीर्वाणैर्देवैः सह भूषणादिभिस्तुल्यरूपिणो व्यदृश्यन्त तथा अनिमिषा इन्द्रादयो देवाः सुवाससः शोभनवस्त्राभरणादियुक्ता व्यदृश्यन्त अलक्ष्यन्त यज्ञस्थानां स इत्थमिति चतुर्थेनान्वयः ॥ २३ ॥

न केवलं तदीयजनानां वस्त्रभूषणादिभिरमरतौल्यमेवापि तु स्वर्गिभ्योऽप्यतिशयितसुखत्वञ्चेत्याह—स्वर्ग इति । उत्तमश्लोकस्य भगवतः चेष्टितमनुगायद्भिः शृण्वद्भिश्च यस्याम्बरीषस्य सम्बन्धिभिर्जनैरमराणां प्रियः स्वर्गोऽपि न प्रार्थितः स्वर्गादप्यतिशयितमुत्तमश्लोकचेष्टितश्रवणगानजं सुखरसमनुभवद्भिः स्वर्गोऽप्युपेक्षित इति भावः तदीयैरेव जनैः स्वर्ग उपेक्षितस्तेनोपेक्षित इति किमु वक्तव्यमिति भावः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परम्भावमुत्कृष्टां भक्तिं येनाम्बरीषेण इदं विश्वं लोष्टवत् पांसुपिण्डवत् स्मृतं येन भावेन वा ॥ १७ ॥

उत्कृष्टभक्तिमतः प्रवृत्तिं दर्शयति—स वा इति ॥ १८ ॥

मुकुन्दस्य लिङ्गं प्रतिमालक्षणं तेन युक्तस्याऽऽलयस्य पादसरोजसौरभेण युक्तायाम् ॥ १९ ॥

कामकाम्यया विषयतृष्णया उत्तमश्लोकस्य हरेः जनानाश्रयतीति जनाश्रया ताम् ॥ २० ॥

तस्मिन् हरौ निष्ठा मनोयोगलक्षणा येषां ते तथा तादृशैर्विप्रैरभिहितः कर्मकलापं कर्मसमूहं सर्वात्मभावं भक्तिं चोक्तिद्वयं भगवति विदधत् ॥ २१ ॥

सरस्वतीमभिस्रोतं सरस्वत्याः स्रोतो जलप्रवाहः स यथाऽभिमुखो भवति तथा सरस्वतीजलमुद्दिश्येत्यर्थः । उपचिता संवर्द्धिता यज्ञस्याऽङ्गभूता दक्षिणा येषां ते तथा तैः ततैर्विद्यासु निपुणैर्वसिष्ठश्चासितश्च गौतमश्चादिर्येषां ते तथा तैः ॥ २२ ॥

तुल्यरूपाः रूपयौवनवस्त्राभरणादिभिः समानवेषाः अनिमिषाः उन्मीलितलोचनाः ॥ २३ ॥

यस्याम्बरीषस्य मनुजैरमरप्रियः स्वर्गोऽपि न प्रार्थित इत्यन्वयः । तत्र किङ्कारणमिति तत्राह—शृण्वद्भिरिति । अनेन मुकुन्दचरितश्रवणगायनाभ्यामधिकं स्वर्गसुखं न भवत्यतः स्वर्गो न प्रार्थित इत्युक्तम् ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स वै इति त्रिकम् । दास्ये निमित्ते साक्षात्तद्दासभावप्राप्त्यर्थमेव काममभिलाषं चकार न तु तद्व्यतिरेकेण तेनैव वा कामकाम्यया विषयभोगेच्छया चकारेत्यर्थः । कथं तत्राह—येनैव प्रकारेण उत्तमश्लोकजना ये प्रह्लादादयस्तदाश्रया तदाधारा या भगवद्विषया रतिः सा भवेत् ॥ १९—२० ॥

एवं पूर्वोक्तप्रकारेणात्मकर्तृककर्मकलापं परे भगवति विदधत् कीदृशन्तम्? सर्वात्मना भावो भक्तिर्यत्र तादृशम् ॥ २१ ॥

ननु, कथं स वै मन इत्यादौ सति यज्ञक्रियाक्यादेकात्मत्वादित्याशङ्क्याह-वसिष्ठादिभिस्ततैरिति । वसिष्ठादिद्वारा कृतैरित्यर्थः । सरस्वतीमिति कर्ममार्गे तस्यामादरो वर्णितः अभिस्रोतमिति क्रमात्तत्सर्वतीर्थक्रमेणेति भावः । धन्वनीति धन्वदेशान्तर्गतेष्वपि तत्तीर्थेष्वित्यर्थः । एतेन तत्रापि पुण्यत्वं ज्ञापितम् ॥ २२—२३ ॥

समर्हयन्तीत्यत्र स्वाराज्यमिन्द्रपदतुल्यता ॥ २४—२५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

येन परमभावेन प्रेम्णा इदं विश्वं लोष्ट्रवत्स्मृतं परामृष्टं भवेत् ॥ १७ ॥

तस्य प्रेम्णः साधनं भक्तियोगमाह—सवा इति त्रिभिः । मन आदीनां चकारेत्यनेनान्वयः, राज्ये स्वपुरुषानिव मन आदीनि यान्यपि स यत्रयत्र न्ययुङ्क्त तत्रतत्रैव तानि तदाज्ञां शिरसा निधायैवासन्निति साधारणं तस्य राज्ञः साम्राज्यमिति भावः । श्रुतिं श्रोत्रं अच्युतस्य विष्णोः सतां तद्भक्तानां कथोदये च कथोत्कर्षे न तु ज्ञानकर्माद्युत्कर्षे इत्यर्थः । मुकुन्दस्य लिङ्गानां प्रतिमानां च आलयानां मन्दिराणां च मथुरादिनित्यसिद्धधाम्नां च वैष्णवानां च दर्शने श्रीमत्यास्तुलस्यास्तत्पादसरोजसम्पर्केण यत्सौरभं तस्मिन् भगवच्चरणार्पिततुलसीगन्ध इत्यर्थः । तदर्पिते महाप्रसादाऽन्ने रसनां जिह्वां हरेः क्षेत्रं मथुरादिपदस्यापि तन्मन्दिरादि तदनुसर्पणे तत्र तत्र पुनःपुनर्गमने हृषीकेशस्य पदयोश्चरणयोः पदानां भक्तानां चापि वन्दने काममभिलाषं दास्ये हरेरहं दासो भूयासमित्येवं न तु कथं कामकाम्यया विषयभोगेच्छार्थां सप्तम्यर्थे तृतीया, कथं चकार ? उत्तमश्लोकजनाः प्रह्लादादय आश्रयो यस्या-स्तथाभूता निष्कामैव रतिर्यथा येन प्रकारेण स्यादभवद्वा तथा चकारेत्येतत् स वै मन इत्यादिषु सर्वत्रैवान्वितं ज्ञेयम् ॥ १८-२० ॥

तस्य तादृशसाम्राज्यस्वरूपस्यापि भक्त्याभासस्यप्रति निष्प्रपञ्चश्च नाभूदित्याह—एवमिति । सदा प्रतिदिनमेव आत्मनः स्वस्य एवं कर्मकलापं स्मरणकीर्तनमन्दिरमार्जनादिकं विदधत्स्वयमेव कुर्वन् महीं, शशास, कर्मकलापं कीदृशम् ? अधोक्षजे कृष्णे सर्वेण श्रोत्रादीन्द्रियवृत्तिसहितेनैवात्मना मनसा भावो रतिर्यतस्तम् अभियज्ञे तपोज्ञानादिभ्योऽप्यधिको यज्ञः पूजा यस्य तस्मिन् हरिभक्तिनिष्ठ-ब्राह्मणेन अभिहितः त्वमष्टावेव यामान् निर्विक्षेपमेव सर्वात्मना हरिं भज राज्यकर्मणि स्वनियुक्तैर्योग्यपुरुषैरेव महीं शाधि चेति शिक्षितस्तच्छिक्ष्यर्थः ॥ २१ ॥

तथैव राज्याधिकारोचिताश्वमेधादियज्ञकरणं च आदिभरत-वन्निरभिमानस्य तस्य प्रतिनिधिद्वारैवेत्याह—ईजे इति । महाश्रूपरत्वैव हेतुना उपचितानि सम्यगेव निर्व्यूढानि अङ्गानि दक्षिणाश्च येषु तैः वसिष्ठादिभिःस्वप्रतिनिधिभिस्ततैर्विस्तृतैः धन्वनि धन्वदेशे सरस्वतीं सरस्वत्याम् अभिस्रोतं स्रोतोऽभिमुखमभिलक्ष्यते न स्वयन्तु ततो विदूरे स्वराजधान्यां निर्विक्षेपं परिचर्यां कुर्वन्नेवाऽतिष्ठदिति व्यञ्जितम् ॥२२॥

गीर्वाणैः सह तुल्यरूपाः नत्वानिमिषत्वेन देवानां वैलक्षण्यं वाच्यं यतो मनुष्या अपि अद्भुतयज्ञदर्शनादनिमिषा व्यदृश्यन्त दृष्टाः ॥ २३ ॥

यस्य मनुजैः मत्पाल्यमानलोकैः स्वर्गो न प्रार्थितः किं स्वर्गीयभोगादधिकभोगप्राप्त्या ? नेत्याह—शृण्वद्भिरित्यादि ॥ २४॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भावं भक्तिं परफलाभिसन्धिरहितं येन भावेन ॥ १७ ॥

तस्य वासुदेवे भक्तिमेव निरूपयति—स इति त्रिभिः । अच्युतसत्कथानामुदये भवणे श्रुतिं श्रवणं चकार ॥ १८ ॥

मुकुन्दस्य लिङ्गानां विग्रहाणां यानि आलयानि तेषां स्थानानां दर्शने दृशौ नेत्रे तद्भक्तानां गात्राणि चरणादीनि तत्-स्पर्शने अङ्गसङ्गमं मस्तकादिसङ्गमम् श्रीमत्यास्तुलस्याः तत्पाद-सरोजेन यत्सौरभं तस्मिन् घ्राणम् तदर्पिते तस्मै निवेदितेऽन्नादौ रसनां रसनेन्द्रियं चकार ॥ १९ ॥

हरेः क्षेत्राणि श्रीमथुरादीनि तीर्थानि तदर्थं यत्पदानुसर्पणं शिबिकादियानं विहाय पद्भ्यामेव गमनं तत्र पादौ चकार हृषीकेशपादयोरभिवन्दने शिरः कामं सङ्कल्पं दास्ये चकार न तु कामकाम्यया विषयेच्छया किं बहुना उत्तमश्लोकस्य विष्णोर्ये जनाः पूर्वे भागवताः तदाश्रया तत्कर्तृका यथा रति-स्तथा तस्येति शेषः ॥ २० ॥

तन्निष्ठैर्भागवतैर्विप्रैरभिहित उपादिष्टः एवमुक्तप्रकारेण सर्वं संपूर्णम् आत्मभावं परमात्मभक्तिम् आत्मनः कर्मकलापं नित्य-नैमित्तिकक्रियासमूहं च भगवति सदा विदधत् महीं शशास पालयामास ॥ २१ ॥

किञ्च असौ अम्बरीषः महाविभूत्या उपचितानि अङ्गानि दक्षिणाश्च येषु तैः ततैर्विततैः अश्वमेधैरधियज्ञं यज्ञाधिष्ठातारं वसिष्ठादिभिर्हेतुभूतैरीजे आराधयामास धन्वानि निरुदके देशे सरस्वतीमभिस्रोतं सरस्वत्याः प्रतिलोमम् ॥ २२ ॥

किञ्च यस्य क्रतुषु सदस्यादयः अद्भुतदर्शनवशान्निमिषोपर-मादनिमिषाः गीर्वाणैर्देवैः तुल्यरूपा व्यदृश्यन्त स इत्थं भक्तियोगेन हरिं प्रीणन् सङ्गान् जहाविति चतुर्थेनान्वयः ॥ २३ ॥

तस्य निष्कामहरिभक्तत्वं कैमुतिकन्यायेनाह—स्वर्ग इति द्वाभ्याम् ॥ २४ ॥

---

### भाषा टीका ।

वह अंबरीष भगवान् श्रीवासुदेव के विषय तथा उनभक्त साधु-जनों के विषय परमभाव को प्राप्त होगये जिस भाव के प्राप्त होने पर यह विश्व लोष्ठ सदृश जान पडता है ॥ १७ ॥

तब तो—

> याने हरी चरण में मन को लगायो ।
> वाणी हु से हरि हि के गुण को जु गायो ॥
> हाथों हु से सदन की करते बुहारी ।
> कानों सु नित्य सुनते हरि कीर्ति भारी ॥ १८ ॥

और इसी प्रकार श्रीमुकुन्द के मूर्त्ति और मंदिरों के दर्शन में नेत्रों को लगाया, और अपने अंग के संगम को भागवत के भक्तों के गात्रस्पर्श में लगाया, और इन्द्रियों को श्रीहरिके चरण-कमल के सौरभ में अर्थात् चरणाब्ज में समर्पित तुलसी के गंध में लगाई इसी प्रकार रसना इन्द्रिय को आपके निवेदित प्रसाद अन्नादिकों में लगाई ॥ १९ ॥

और अपने पगों को श्रीहरि के क्षेत्र गमन में, शिरको हृषी-केश के पदाभिवन्दन में, और अपनी चाहना को आपके दास्य रस की चाहना में लगाई विषयों की इच्छा में नहीं लगाई, कि जिसमें उत्तम श्लोक [ श्रीकृष्ण ] के जनों में प्रीति हो ॥ २० ॥

(१)समर्द्धयन्ति तान्कामाः स्वाराज्यपरिभाविताः ।
दुर्लभा नापि सिद्धानां मुकुन्दं हृदि पश्यतः ॥ २५ ॥
स इत्थं भक्तियोगेन तपोयुक्तेन पार्थिवः ।
स्वधर्मेण हरिं प्रीणन् सङ्गान् सर्वान् शनैर्जहौ ॥ २६ ॥
गृहेषु दारेषु सुतेषु बन्धुषु द्विपोत्तमस्यन्दनवाजिपत्तिषु ।
अक्षय्यरत्नाभरणायुधादिष्वनन्तकोशेष्वकरोदसन्मतिम् ॥ २७ ॥
तस्मा अदाद्धरिश्चक्रं प्रत्यनीकभयावहम् ।
एकान्तभक्तिभावेन प्रीतो भृत्याभिरक्षणम् ॥ २८ ॥
आरिराधयिषुः कृष्णं महिष्या तुल्यशीलया ।
युक्तः साम्वत्सरं वीरो दधार द्वादशीव्रतम् ॥ २९ ॥
व्रतान्ते कार्त्तिके मासि त्रिरात्रं समुपोषितः ।
स्नातः कदाचित्कालिन्द्यां हरिं मधुवनेऽर्चयत् ॥ ३० ॥
महाऽभिषेकविधिना सर्वोपस्करसम्पदा ।
(२)अभिषिच्याम्बराकल्पैर्गन्धमाल्यार्हणादिभिः ॥ ३१ ॥
तद्गतान्तरभावेन पूजयामास केशवम् ।
ब्राह्मणांश्च महाभागान् सिद्धार्थानपि भक्तितः ॥ ३२ ॥

भाषा टीका ।

इस प्रकार राजा अंबरीष अपने सर्व कर्म कलापों को अधियज्ञ भगवान अधोक्षज परब्रह्म के विषय सर्वात्मभाव से समर्पण करता हुआ ब्राह्मणों के कहने से इस पृथिवीको भगवन्निष्ठ होकर पालन करते रहे ॥ २१ ॥

और धन्वदेश में सरस्वती जल का उद्देश करके बड़ी विभूति के वृद्धि को प्राप्त हुए, अंग और दक्षिणादिकों से और वसिष्ठ असित गौतमादिकों के विधि विधान द्वारा विस्तारित ऐसे उत्तम आश्रम में अश्वमेध यज्ञों से यज्ञपति ईश्वर श्रीगोविन्द का यजन करते हुए ॥ २२ ॥

जिन अम्बरीष महाराज के यज्ञों में सुन्दर वस्त्र पहिने हुए सभासद और ऋत्विक् जन देवताओं के साथ में तुल्य रूप वाले देख पड़ते हुए यदि कहो कि देव लोग तो अनिमिष रहे? तो वे सब लोग भी आश्चर्य से दर्शन में उत्सुक होने से निर्निमेष रहे ॥ २३ ॥

जिन अम्बरीष महाराज के राज्य में मनुष्यों को भी स्वर्ग की इच्छा नहीं होती रही क्योंकि वे लोग सदा उत्तम श्लोक श्रीहरि के चरित्रों को सुनते रहे और गान करते रहे ॥२४॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आस्तां स्वर्गप्रार्थनशङ्काऽपि यद्यतः मुकुन्दं हृदि पश्यतस्तान् जनान्कामा विषया न समर्द्धयन्ति न हर्षयन्ति, कथम्भूताः स्वाराज्येन स्वरूपसुखेन परिभाविता अतिशायिताः अतएव सिद्धानामपि दुर्लभाः यानिति पाठे यान्मनुजान् स्वाराज्येस्यत्रापि द्वितीयान्तपाठे मनुजानां विशेषणम् यमिति पाठे यमम्बरीषं पश्यतामिति पाठे सिद्धानां विशेषणम् ॥ २५ ॥

एवं भगवदाराधनपरस्य कामाद्युपेक्षा नैव चित्रमित्युपसंहरति स इत्थमिति द्वाभ्याम् ॥ २६ ॥२७ ॥

नन्वेवम्भूतोऽसौ कथं प्रतिपक्षान् जयेत्तत्राह–तस्मा इति ॥ २८ ॥

तदेवं तस्य वैराग्यादिकं हरिभक्तिं चोक्त्वा ब्रह्मदण्डो यत्र न प्राभूदिति यदुक्तं तदेव द्वादशीव्रतनिष्ठां कथयन्नाह–आरिराधयिषुरित्यादिना यावदध्यायसमाप्ति ॥ २९ ॥

अर्चयत् आडागमाभाव आर्षः ॥ ३० ॥ ३१ ॥

ब्राह्मणांश्च पूजयामास सिद्धार्थानाप्तकामान्पूजानपेक्षानपि ॥ ३२ ॥

(१) नयर्द्धयन्ति यान् कामाः इति वीर० । (२) अभिषिच्य वराकल्पैः इति विज० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आस्तांतावत्स्वर्गप्रार्थनाशङ्कापि सिद्धानां योगीश्वराणामपि दुर्लभाः कामाः काम्यन्त इति कामाः अणिमादयः स्वाराज्यपरिभाविताः स्वाराज्येनाकर्मवश्यत्वावहब्रह्मात्मकस्वात्मानुभवेन परिभाविताः प्रापिताः मुकुन्दं हृदि पश्यतः उपासीनान् यान् यदीयान् जनान्नवर्द्धयन्ति न हर्षयन्ति अणिमादयोपि न हर्षयन्ति किमुत न स्वर्गो हर्षयतीति भावः । यमिति पाठे यमम्बरीषं पश्यतामिति पाठे तत्सिद्धानां विशेषणम् ॥ २५ ॥

यस्य सम्बन्धिनो जना एवंविधाः स पार्थिवोऽम्बरीषः तपोयुक्तेन तपः शब्दोऽत्रात्मयाथात्म्यज्ञानयोगपरः "तप आलोचने" इति ज्ञानार्थात्तपधातोर्निष्पन्नत्वात् तद्युक्तेन स्वधर्मेण स्ववर्णाश्रमोचितासङ्गकर्मानुष्ठानेन भक्तियोगेन ज्ञानकर्मानुगृहीतभगवद्भक्तियोगेनेत्यर्थः । हरिं स्वाश्रितानां संसृतिबन्धहरं भगवन्तं प्रीणयन् शनैः सर्वान् सङ्गान् हृद्गतान् देहतदनुबन्धिविषयान् ऐहिकानामुष्मिकांश्च जहौ तत्याज ॥ २६ ॥

सङ्गान् जहावित्येतदेव प्रपञ्चयति—गृहेष्विति । गृहादिषु गजोत्तमरथाश्वादिवस्तुषु अक्षय्येषु वस्त्रादिषु अनवधिकेषु कोशेषु धनभाण्डागारेषु असन्मतिमपुरुषार्थत्वबुद्धिमनित्यत्वबुद्धिं हेयत्वबुद्धिं वा अकरोत् ॥ २७ ॥

एवंभूतोऽसौ कथं प्रतिपक्षान् जितवान् ? तत्राह—तस्मा इति । एकान्तभक्तियोगेनानन्यप्रयोजनभक्तियोगेन प्रीतो हरिस्तस्मै अम्बरीषाय भीतानभिरक्षतीति तथा नन्द्यादित्वात्कर्त्तरि ल्युः प्रत्यनीकाः समाश्रितानां विपक्षास्तेषां भयमावहतीति तथा तच्चक्रं सुदर्शनमदात् ॥ २८ ॥

को वैवंविधस्यास्य प्रतिपक्षो बभूव ? यस्य भयावहं हरिश्चक्रमदादित्यपेक्षायां तदुपपादयितुं तावत्प्रस्तावमाह—आरिराधयिषुरित्यादिना । प्राक्छिष्टमित्यतः प्राक्तनेन ग्रन्थेन भगवन्तमाराधयितुमिच्छुर्वीरोऽम्बरीषस्तुल्यशीलया स्वतुल्यस्वभावसद्वृत्तिमत्या भार्यया सह युक्तः सम्वत्सरपर्यन्तं द्वादशीव्रतं दधार चकार ॥२९॥

व्रतान्ते सम्वत्सरमनुष्ठितव्रतान्ते कार्त्तिके मासि अनेन व्रतोपक्रमोपि कार्त्तिकशुद्धद्वादश्यामिति फलितं त्रिरात्रं नवमीदशम्येकादशीषु समुपोषितः दशम्यामेकभुक्तं द्वादश्यामेकभुक्तमेकादश्यामुपवास इत्युपवासत्रयमिति कश्चित्सम्प्रदायः कदाचिद्द्वादश्यामित्यर्थः । कालिन्द्यां यमुनायां स्नात्वा मधुवनाख्ये वने सर्वेषामुपकरणानामाराधनोपकरणानां गन्धपुष्पधूपदीपादीनां सम्पत्समृद्धिर्यस्य तेन महाभिषेकविधिना सहस्रकलशस्नापनविधिना हरिमभिषिच्यार्चयत् अडभाव आर्षः ॥ ३० ॥ ३१ ॥

आर्चयदित्येव प्रपञ्चयति—वरैः श्रेष्ठैराकल्पैराभरणैर्गन्धैः माल्यैः कुसुमैरर्हणैः अर्घ्याद्यैः केरादिशब्दात्पाद्यादिभिर्धूपदीपनैवेद्यादिभिश्च केशवं तदुगान्तर्भावेन केशवविषयान्तःकरणव्यापारेण पूजयामास तथा महाभागान् विबुधः अत एव सिद्धार्थान् सिद्धः प्राप्तः प्रहर्षार्थः आनन्दो येषां तान् नित्यसन्तुष्टान् पूजानपेक्षानितियावत् तादृशानपि ब्राह्मणांश्च पूजयामास भागवतानप्यर्चयदित्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यस्य काम्यन्त इति कामा विषयभोगा नो अल्पत्वात्नवाञ्छित इति नेत्याह—समृद्धा इति । भोगेच्छूनामलं बुद्धिविषया भवन्तीत्यर्थः, समृद्धौ निमित्तमाह स्वाराज्येति स्वराज्येन स्वरूपभूतैश्वर्येण परिभाविताः प्रचोदिताः अत एवास्य सुलभत्वेऽप्यन्येषां दुर्लभा इत्याह—दुर्लभा इति । अत्रापीदमेव निमित्तमाह मुकुन्दमिति ॥ २५ ॥

अपरोक्षज्ञानफलमाह—स इति । स्वधर्मेण प्रजापालनलक्षणेन ॥२६॥

कथं जहावित्यत्राह—गृहेष्विति । असन्त्यमङ्गलानि अनर्थकरणानीति मतिं बुद्धिं चकार ॥ २७ ॥

अपरोक्षज्ञानित्वेपि यावद्देहं मोक्षासम्भवाद्वृद्धिकभक्तिभास्करा द्युत्फुल्लहृदयाम्बुजस्य हरेरम्बरीषेऽनुग्रहविशेषं दर्शयितुमाह, तस्मा इति ॥ २८ ॥

लोकशिक्षाप्रकटनार्थं साम्वत्सरमित्युक्तं न त्वन्यकालनिषेधार्थम् अन्यथा भक्तिलोपः प्रसज्येत ॥ २९—३० ॥

सम्वत्सरव्रतान्तसर्वसाधनसम्पदा महाभिषेकविधिः साम्राज्याभिषेकप्रकारः वराकल्पैरुत्तमाभरणैः ॥ ३१ ॥

तद्भक्तान्तरभावेन श्रीहरिनिष्ठामनस्कत्वेन सिद्धार्थान् कृतकृत्यान् ॥ ३२ ॥ ३३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तपोऽत्र द्वादशीव्रतादिगृहादिषु भगवत्सेवानुपयोगिष्विति ज्ञेयम् ॥ २६—२८ ॥

द्वादशीव्रतम् अभीष्टविशेषसिद्ध्यर्थं तद्विशेषम् ॥ २९—५३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्च स्वर्गीयभोगादधिके भोगे स्वतःसिद्धेऽपि यदीया मनुजास्तत्र नाऽसज्जन्तेत्याह—समर्द्धयन्तीति । यान् मनुजान् कामा भोगा न समर्द्धयन्ति न हर्षेण वर्द्धयन्ति "ऋधुवृद्धौ" कीदृशाः स्वाराज्यमिन्द्रपदतुल्यं सुखं तेन परितःसर्वतोभावेन वासितः यद्वा स्वाराज्येन स्वरूपसुखेन मुक्त्यानन्देन वासिता युक्ता अत एव सिद्धानामपि दुर्लभाः तत्र हेतुगर्भं मनुजान् विशिनष्टि—मुकुन्दमित्यादिना । अम्बरीषप्रसङ्गादिति भावः । यानिति पाठे यद्यस्मान्मुकुन्दं हृदि पश्यतः परिभावितानिति पाठे मनुजविशेषणं यमिति पाठे यमम्बरीषम् ॥ २५ ॥

मन्दिरमार्जनजलकलशवहनवैष्णवशुश्रूषणादिना शरीरकष्टं भोगत्यागश्च तपस्तद्युक्तेन स्वधर्मेणेति भक्तियोगेनेत्यस्य विशेषणं चकाराभावादम्बरीषस्य शुद्धभक्तत्वाच्च एकान्तभक्तिभावेनेत्यग्रिमोक्तेश्च ॥ २६ ॥ २७ ॥

नन्वेवम्भूतोऽसौ कथं प्रतिपक्षान् जयेत् ? तत्राह—तस्मा इति । प्रीत इति तस्यैकान्तिकभक्तौ विक्षेपाभावार्थमित्यर्थः ॥ २८ ॥

**गवां रुक्मविषाणीनां रूप्याङ्घ्रीणां सुवाससाम् ।**
**पयःशीलवयोरूपवत्सोपस्करसम्पदाम् ॥ ३३ ॥**

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्यैकादशीव्रतनिष्ठया दर्शितयैव सर्वभक्तिनिष्ठां ज्ञापयन्नाह, आरिराधयिषुरित्यादि ॥ २९ ॥

तस्य स्वायुःपर्यन्तमेकादशीव्रतनिष्ठत्वेपि संवत्सरमात्रन्तु मथुरायामेकादशीव्रतं कर्त्तव्यमित्यभिलाष आसीदतस्तत्पूर्त्तौ सत्यां व्रतान्त इति । दशमीद्वादश्योर्विहितेतरभोजनाभावेन एकादश्यां निराहारत्वेन त्रिरात्रमुपोषितः ॥ ३० ॥

सर्वेषामुपस्कराणां सर्वौषध्यादीनां सम्पद्यत्र तेन आकल्पै- र्विभूषणैः ॥ ३१ ॥

मद्भुतान्तरभावेन तदेकमनस्त्वेन ॥ ३२, ३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आस्तां स्वर्गप्रार्थनशङ्कापि यतः तान् अम्बरीषमनुजान् स्वाराज्यं ब्रह्मस्वरूपप्राप्तिलक्षणो मोक्षस्तेन माविता अतिशायिताः अत एव सिद्धानामपि दुर्लभाः काम्यन्त इति कामाः सर्वक्लेशविनिर्मु- क्तत्वकालादिभयशून्यत्वस्वरूपानन्दत्वसत्वादयो गुणाः न समर्द्ध- यन्ति, तत्र हेतुः मुकुन्दं हृदि पश्यतः अनेन संसारिभ्यः सिद्धानां सिद्धेभ्यः ब्रह्मस्वरूपप्राप्तिलक्षणमोक्षवतां तेभ्यो मुकुन्दध्यान- निष्ठानामधिकं सुखं ततोपि मुकुन्दध्यानफलभूततद्भावापत्तिलक्षण- मोक्षवतां निरतिशयं सुखमिति द्योत्यते ॥ २५–२८ ॥

महिष्या तुल्यशीलया सह कृष्णमारिराधयिषुः साम्वत्सरं व्रतं षष्ठस्कन्धप्रसिद्धं दधार, तथा—

“सम्पूर्णैकादशी यत्र द्वादशी च तथा भवेत् ।
त्रयोदश्यां मुहूर्त्तार्द्धं वञ्जुली सा हरिप्रिया ॥
शुक्ले वा यदि वा कृष्णे यदा भवति वञ्जुली ।
एकादशीदिने भुक्त्वा द्वादश्यां कारयेद्व्रतम् ॥
पारणं द्वादशीमध्ये त्रयोदश्यां न कारयेत्” ।

इति पाद्मोक्तं द्वादशीव्रतं च युक्तं साम्वत्सरव्रतान्ते काल- गत्या योजितं दधार चकारेत्यर्थः ॥ २९ ॥

तदेवाह-व्रतान्ते इत्यादिना । कार्तिके मासि व्रतस्य साम्वत्सर- व्रतस्य योऽन्तः समाप्तिः कार्त्तिकशुक्लत्रयोदशीगतायां द्वादश्या- मित्यर्थः, त्रिरात्रं समुपोषितः दशम्यां मध्यान्हे समये एक- भुक्तः यद्यपि “एकादशीदिने भुक्त्वा द्वादश्यां कारयेद्व्रतम्” इति पाद्मोक्तिस्तथाप्यशक्तविषयमेतद्वाक्यमिति मत्वा श्रद्धातिशयेन एकादश्यां द्वादश्यां च व्रतोपवास एवं त्रिरात्रं सम्यगुपो- षितः कृतोपवासः कालिन्द्यां स्नातः कचित् कस्मिंश्चित्स्थाने मधुवने हरिमर्चयदित्यन्वयः ॥ ३०—३१ ॥

सिद्धार्थान् अवाप्तकामांश्च पूजयामास ॥ ३२ ॥

---

भाषा टीका ।

स्वर्ग तौ कयाही वस्तु है परञ्च जो लोग अपने हृदय में मुकुन्द को देखने वाले है ऐसे लोगों को तौ, बडे २ सिद्धों को दुर्लभ जो विषय भोग हैं वेभी नहीं हर्षजनक होते हैं क्योंकि ! वे सव विषय सुख स्वरूप सुख से तिरस्कृत हो गये हैं ॥ २५ ॥

वह पार्थिव राजा अम्बरीष इस प्रकार तपयुक्त भक्ति- योग से और अपने धर्म से श्रीहरि को प्रसन्न करता हुआ धीरे २ सर्व सङ्गों को छोडता भया ॥ २६ ॥

गृह, दारा, सुत, बन्धु, उत्तम हाथी, रथ, अश्व, और पदाति इत्यादिक सेनामें, तथा अक्षय रत्न, आभरण, आयुधों में और अटूट खजानों में से भी राजा अपनी खोटी बुद्धि अर्थात् ममता को छोडता भया ॥ २७ ॥

राजा अम्बरीष के भक्ति एकान्त भाव से प्रसन्न होकर श्रीहरि ने शत्रुओं की सेना को भय प्राप्त करने वाला अपना सुदर्शन चक्र अपने दास की रक्षा के लिये दिया ॥ २८ ॥

एक समय राजा अपने सदृश स्वभाव वाली रानी सहित श्रीकृष्ण के आराधन की इच्छा से सावधान होकर एक वर्ष तक द्वादशी का व्रत धारण करते हुए ॥ २९ ॥

कार्तिक मास में व्रत के अन्त में तीन रात्रि पर्यन्त उप- वास किया और श्रीयमुनाजी में स्नान करके मधुवन में हरि पूजन करते रहे ॥ ३० ॥

सर्व सामग्री और सम्पत्तियों से महा अभिषेक की विधि से श्रीकृष्ण को अभिषेक कराया और उत्तमोत्तम वस्त्र पहनाये गन्ध धूप दीप मालाओं से पूजा करी ॥ ३१ ॥

और परमात्मा में आन्तरिक भाव से श्रीकेशव का पूजन किया । और समृद्ध ब्राह्मणों को भी फिर अपनी भक्ति से पूजन करते हुए ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

रूप्याङ्घ्रीणां रूप्यखुराणाम् पयःशीलादिसम्पदो यासां तासाम् ॥ ३३ ॥

प्राहिणोत्साधुविप्रेभ्यो गृहेषु न्यर्बुदानि षट् ।
भोजयित्वा द्विजानग्रे स्वाद्वन्नं गुणवत्तमम् ॥ ३४ ॥
लब्धकामैरनुज्ञातः पारणायोपचक्रमे ।
तस्य तर्ह्यतिथिः साक्षाद्दुर्वासा भगवानभूत् ॥ ३५ ॥
तमानर्चातिथिं भूपः प्रत्युत्थानासनार्हणैः ।
ययाचेऽभ्यवहाराय पादमूलमुपागतः ॥ ३६ ॥
प्रतिनन्द्य स तद्याच्ञां कर्त्तुमावश्यकं गतः ।
निममज्ज बृहद्ध्यायन् कालिन्दीसलिले शुभे ॥ ३७ ॥
मुहूर्त्तार्द्धावशिष्टायां द्वादश्यां पारणं प्रति ।
चिन्तयामास धर्मज्ञो द्विजैस्तद्धर्मसङ्कटे ॥ ३८ ॥
ब्राह्मणातिक्रमे दोषो द्वादश्यां यदपारणे ।
यत्कृत्वा साधु मे भूयादधर्मो वा न मां स्पृशेत् ॥ ३९ ॥
अम्भसा केवलेनाऽथ करिष्ये व्रतपारणम् ।
प्राहुरब्भक्षणं विप्रा ह्यशितं नाशितं च तत् ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

न्यर्बुदानि षट् षष्टिकोटीः ॥ ३४ ॥

तर्हि तदैव दुर्वासा अतिथिः साक्षात्प्रत्यक्षोऽभूत् ॥ ३५ ॥

आनर्चार्चितवान् अभ्यवहाराय भोजनाय ॥ ३६ ॥

आवश्यकं नैयमिकं माध्याह्निकं कर्म कर्त्तुं गतः बृहद्ब्रह्म ॥ ३७-३८ ॥

धर्मसङ्कटमेवाह—यद्यतो ब्राह्मणातिक्रमे दोषो धर्मः द्वादश्यामपारणेऽपि दोषो व्रतवैगुण्यं यत्कृत्वा यस्मिन्कृते ॥ ३९ ॥

एवं द्विजैस्सह विचार्य निश्चिनोति—अम्भसेति । व्रतस्य पारणं समाप्तिं तदशितमाहुरशितं नेति चाहुः श्रुतिश्च "अपोऽश्नाति तन्नैवाशितं नैवानशितम्" इति ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः षड्गवां न्यर्बुदानि षष्टिकोटिं साधु यथा तथा विप्रेभ्यः प्राहिणोत्प्रददौ कथम्भूतानाम् गवां रुक्मविषाणानां स्वर्णकचचित-विषाणयुक्तानां राजतालङ्कृतपादानां शोभनानि वासांसि यासां पयः क्षीरं च शीलं सुस्वभावश्च वय अपूर्वप्रसवत्वं च रूपं लाङ्गूलखुरविषाणवैलक्षण्यं च वत्साश्च उपस्कराः दोहनपात्रादीनि च तेषां सम्पत्समृद्धिर्यासां तासां ततः स्वादु मृष्टं गुणवत्तरं षड्रसोपेतमन्नमग्रे ब्राह्मणान् भोजयित्वा ॥ ३३—३४ ॥

लब्धाः कामाः दक्षिणादयो यैस्तैर्द्विजैरनुज्ञातः पारणायोपचक्रमे, तर्हि तदैव भगवान् दुर्वासास्तस्याम्बरीषस्यातिथिः साक्षादभूत्प्रत्यक्षो बभूव ॥ ३५ ॥

तमागतमतिथिं सम्यक्प्रत्युत्थानादिभिरभ्यर्च्य तस्य पादयोर्मूलमुपागतः प्रयातोऽभ्यवहाराय भोजनाय ययाचे भवताऽत्र भोक्तव्यमिति प्रार्थयामासेत्यर्थः ॥ ३६ ॥

ततः स दुर्वासाः तस्याम्बरीषस्य याच्ञां प्रतिनन्द्यावश्यकं नैयमिकं माध्याह्निकं कर्त्तुं गतः शुचौ शुद्धे कालिन्द्याः यमुनाया जले बृहत् ब्रह्म ध्यायन् निममज्ज स्नानं चकारेत्यर्थः ॥ ३७ ॥

तदा धर्मज्ञोऽम्बरीषो द्वादश्यां मुहूर्त्तार्द्धेन घटिकामात्रेणावशिष्टायां सत्यां पारणंप्रति सङ्कटे पारणविषयके सङ्कटे द्विजैः सह चिन्तयामास ॥ ३८ ॥

सङ्कटमेवाह—ब्राह्मणातिक्रम इति । ब्राह्मणातिक्रमे ब्राह्मणस्यातिथेरतिक्रमे दोषः अतिथिं निमन्त्र्य तमनादृत्यैव भोजने महान्प्रत्यवायस्तथा द्वादश्यामपारणे च दोषः व्रतवैगुण्यादित्येवंविधं सङ्कटं प्राप्तं तत्र यत्कृत्वा साधु मे भूयात् यत्करणेऽप्यत्यवायसमुदायो यथा चेत्यर्थः । यथा च मे साधु भूयादित्यर्थः यथा चाधर्मो मां न स्पृशेत् तथा ब्रूतेति शेषः ॥ ३९ ॥

एवं द्विजैर्विचार्य निश्चिनोति—अम्भसेति । केवलेनाम्भसा व्रतस्याङ्गभूतपारणं करिष्ये एवं सत्यपारणस्य कृतत्वान्न व्रतवैगुण्यं नाप्यतिथ्यतिक्रमणदोषः अनशनादित्याह—प्राहुरिति । हे

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विप्राः ! यद्पां भक्षणं तदाशितं नाऽशितंचाहुः श्रुतय इति तथा च श्रुतयः "अपोऽश्नाति तन्नैवप्राशितं तन्नैवप्राशितम्" इत्याद्याः ॥४०॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शतकोटिसङ्ख्यान्यर्बुदम् ॥ ३४ ॥ ३५ ॥

अभ्यवहाराय भोजनाय ॥ ३६ ॥

आवश्यकं नित्यकर्म बृहत् ब्रह्म बृहतेर्मनोढिक् प्रत्ययः ॥ ३७ ॥

धर्मसङ्कटे धर्मापदि प्राप्तायां सत्याम् ॥ ३८ ॥

आमन्त्रितब्राह्मणातिक्रमे दोषोऽस्ति द्वादश्यामपारणे श्रीहरिप्रियद्वादशीभोजनाकरणे च दोषोऽस्ति यत्तस्माद्यत्कृत्वा मे साधु भूयादुभयदोषपरिहारेण श्रेयः स्यात् उभयोरेकातिक्रमलक्षणो अधर्मो वा मां न स्पृशेदिति तद्विजैः सह चिन्तयामास ॥ ३९ ॥

एवं सञ्चिन्त्य द्विजानां हार्दं स्वहार्दं चैकमेवेत्याशयेनाह—अम्भसेति । केवलेन श्रीद्यन्नरहितेन; तत्र किं प्रमाणम् ? इति तत्राह—आहुरिति । हे विप्राः अम्भक्षणं अम्भसा पारणम् अशितं भुक्तं पूर्वव्रतधारणार्थं भुक्तं भवति उत्तरकर्मार्थम् अनशितमभुक्तं भवतीत्याहुर्वेदाः इति हि यत्तदिदं युष्माकं च सिद्धं तस्मात्तेनैव व्रतपारणां करिष्ये इत्यन्वयः ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

षट् न्यर्बुदानि षष्टिकोटीः ॥ ३४—३६ ॥

बृहत् ब्रह्म ॥ ३७ ३८ ॥

यद्यस्मात् ब्राह्मणातिक्रमे द्वादश्यामपारणे च दोषः तस्मादत्र धर्मसङ्कटे यत् कृत्वेत्यादिभूयात् भवेत् ॥ ३९ ॥

ततश्च विप्रांस्तूष्णीं स्थितान् समाधातुमशक्नुवतोऽभिलक्ष्य स्वयमेव विचार्य स निश्चयमाह—अम्भसेति । हेविप्राः तत् अशितमिति द्वादश्या अनतिक्रमः नाशितमिति ब्राह्मणस्याप्यनतिक्रम इति अत्र श्रुतिश्च "अपोऽश्नाति तन्नैवाशितं नैवानशितमिति ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पयःशीलादिसम्पदो यासाम् ॥ ३३ ॥

न्यर्बुदं दशकोटयः—

"एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः ।

न्यर्बुदमर्बुदं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात् ॥

जलधिश्चान्त्यं मध्यपरार्द्धमिति दशगुणोत्तराः संज्ञाः ।

संख्यायाः किल लोके व्यवहारार्थं यथा कृता पूर्वैः ॥

इति वाक्यात् ॥ ३४ ॥

तस्य पारणाय प्रवृत्तस्य तर्हि तदैव दुर्वासा अतिथिः साक्षात्प्रत्यक्षो ऽभूत् ॥ ३५ ॥

बहून् सम्पूज्य व्रतपारणाय प्रवृत्तोपि भूयः तमानर्च अर्चितवान् अभ्यवहाराय भोजनाय च यथा प्रार्थयामास ॥ ३६ ॥

आवश्यकमवश्यं करणीयं कर्म कर्तुं गतः बृहद्ब्रह्म ॥ ३७ ॥

एवमल्पां द्वादशीं दृष्ट्वा शीघ्रमुत्थाय आमध्याह्नाः क्रियाः समाप्यापि पारणार्थं प्रवृत्तः दुर्वाससि अनागते पारणां प्रति मुहूर्तार्द्धावशिष्टायां द्वादश्यां सत्यां तस्मिन्धर्मसङ्कटे द्विजैः सह चिन्तयामास ॥ ३८ ॥

धर्मसङ्कटे चिन्तामेवाह—ब्राह्मणातिक्रमे दोषः निमन्त्रितविप्रोपेक्षणे प्रत्यवायरूपो दोषः द्वादश्यामपारणेऽपि व्रतवैगुण्यरूपो दोषः अस्मिन्सङ्कटे यत्कृत्वा मे साधु भूयात् अधर्मो वा मां न स्पृशेत् तच्चिन्त्यताम् ॥ ३९ ॥

एवं द्विजैः सह विचार्य निश्चिनोति—अम्भसेति । अतश्च पारणां समाप्तिं केवलेनाम्भसा करिष्ये तत्केवलाम्भक्षणं हे विप्राः ! अशितमाहुः अशितं नेति चाहुः शिष्टाः शिष्टव्यवहारमूला श्रुतिः "अपोऽश्नाति तन्नैव प्राशितं तन्नैवाप्राशितम्" इति ॥ ४० ॥

---

### भाषाटीका ।

और गायों के सुवर्ण से सींग मँढाकर चांदी से खुर मंढाकर ऊपर सुन्दर रेसमी झूल उढाकर बहुत दुग्ध वाली सीधी थोडी अवस्थाकी बछुडा और ऊपरके उपकरण सहित ॥ ३३ ॥

ऐसी २ साठ कोटि गायें, ब्राह्मण और साधुओं को और गुणवत् अन्नभोजन कराकर उनके घर पहुँचादीनी ॥ ३४ ॥

ब्राह्मणों ने भोजन कर दक्षिणालेकर राजा को भोजन की आज्ञा दीनी । इतने हीमें साक्षात् दुर्वासा भगवान् अतिथी पधारे ॥ ३५ ॥

राजा ने उनको उठकर आसन देकर पूजा करी और दण्डवत् प्रणाम कर भोजन के लिये प्रार्थना करी ॥ ३६ ॥

दुर्वासाने भी राजाकी याचना को स्वीकार कर श्री यमुनाजी में अपना आवश्यक कर्म करने को गये और वहां पर स्वच्छ कालिन्दी के जल में गोता लगाकर ब्रह्म ध्यान करने लगे ॥ ३७ ॥

अब द्वादशी अर्द्ध महूर्त अवशिष्ट रही राजा धर्म सङ्कट में होकर ब्राह्मणों को बुलाकर विचार करने लगे ॥ ३८ ॥

राजा ब्राह्मणों से बोले, कि-निमन्त्रित ब्राह्मण के अतिक्रमण का दोष जैसे न हो और द्वादशी में नहीं पारण काभी जो दोष है वहभी नहीं हो, हे ब्राह्मणों ! ऐसा उपाय करो कि-जिस्में मेरेलिये दोष न हो और पारण भी होजावे ॥ ३९ ॥

इत्यपः प्राश्य राजर्षिश्चिन्तयन्मनसाऽच्युतम् ।
प्रत्याचष्ट कुरुश्रेष्ठ ! द्विजागमनमेव सः ॥ ४१ ॥
दुर्वासा यमुनाकूलात्कृतावश्यक आगतः ।
राज्ञाभिनन्दितस्तस्य बुबुधे चेष्टितं धिया ॥ ४२ ॥
मन्युना प्रचलद्गात्रो भ्रुकुटीकुटिलाननः ।
बुभुक्षितश्च सुतरां कृताञ्जलिमभाषत ॥ ४३ ॥
अहो अस्य नृशंसस्य श्रियोन्मत्तस्य पश्यत ।
धर्मव्यतिक्रमं विष्णोरभक्तस्येशमानिनः ॥ ४४ ॥
यो मामतिथिमायातमातिथ्येन निमन्त्र्य च ।
अदत्त्वा भुक्तवांस्तस्य सद्यस्ते दर्शये फलम् ॥ ४५ ॥
एवं ब्रुवाण उत्कृत्य जटां रोषविदीपितः ।
तया स निर्ममे तस्मै कृत्यां कालानलोपमाम् ॥ ४६ ॥
तामापतन्तीं ज्वलतीमसिहस्तां पदा भुवम् ।
वेपयन्तीं समुद्वीक्ष्य न चचाल पदान्नृपः ॥ ४७ ॥
प्राग्दिष्टं भृत्यरक्षायां पुरुषेण महात्मना ।
ददाह कृत्यां तां चक्रं क्रुद्धाहिमिव पावकः ॥ ४८ ॥

---

### भाषा टीका ।

ऐसा कहकर बोला, कि-अथवा केवल जल मात्र से व्रत का पारण करूंगा हे विप्रो ! जल भक्षण भोजन किया सा भी है और नहीं किया सा भी है ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रत्याचष्ट प्रत्यैक्षत ॥ ४१-४२ ॥

प्रचलत्कम्पमानं गात्रं यस्य भ्रुकुटिभ्यां कुटिलमाननं यस्य ॥ ४३—४७ ॥

क्रुद्धमहिं पावको दावाग्निरिव ॥ ४८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीत्थं विनिश्चित्येति शेषः । स राजर्षिरम्बरीषोऽच्युतं मनसा चिन्तयन् धर्मस्य सुसूक्ष्मत्वात् तदज्ञाननिमित्तबाधकपरिहारायाच्युतं चिन्तयन्निति भावः अपः प्राश्य हे कुरुश्रेष्ठ ! द्विजस्य दुर्वाससः आगमनमेव प्रत्याचष्ट प्रत्यैक्षत ॥ ४१ ॥

ततः कृतमावश्यकं माध्याह्निकं येन स दुर्वासाः यमुनायाः कूलात्तीरादागतः राज्ञाऽम्बरीषेणाभिनन्दितोपि ऋषित्वाद्धिया सूक्ष्मया दृष्ट्या तस्य राज्ञः चेष्टितमवज्ञानरूपं बुबुधे विज्ञातवान् ॥ ४२ ॥

ततो मन्युना हेतुना प्रचलद्गात्रं शरीरं यस्य भ्रुकुटिभ्यां कुटिलमाननं यस्य सः सुतरां भृशं बुभुक्षितश्चेति कोपातिशयद्योतनार्थमुक्तं कृताञ्जलिं बद्धाञ्जलिमम्बरीषं प्रत्यभाषत ॥ ४३ ॥

अहो जनाः ! अस्य क्षत्रबन्धोर्धर्मव्यतिक्रमं पश्यत कथंभूतस्य ? क्रूरस्वभावस्य श्रिया सम्पदा गर्वितस्य विष्णोरभक्तस्यापि तस्येष्टं भक्तमात्मानं मन्यमानस्य ॥ ४४ ॥

कोसौ धर्मव्यतिक्रमः ? इत्यत्राह—य इति । योऽयं क्षत्रबन्धुरागतं मामातिथ्येन आतिथ्यार्थमध्ययनेन वसतीतिवत् तृतीया निमन्त्र्यातिथये मह्यमदत्त्वैव भुक्तवानयमेव धर्मव्यतिक्रमः अतस्तस्य धर्मव्यतिक्रमस्य फलं सत्यं तव दर्शये दर्शयामि ॥ ४५ ॥

इत्येवं ब्रुवाणः रोषेण विदीपितां प्रज्वलितां जटामुत्कृत्य उच्छिद्योद्धात्येत्यर्थः । स दुर्वासास्तया जटया तस्मा अम्बरीषाय तं हन्तुमित्यर्थः । कालाग्नितुल्यां कृत्यां निर्ममे मारिकां शक्तिं निर्मितवानित्यर्थः ॥ ४६ ॥

ततोऽसिः खड्गो हस्ते यस्याः पदा भुवं वेपयन्तीं कम्पयमानां तामभिमुखमागच्छन्तीं ज्वलितां दीप्तां सम्यगुद्वीक्ष्य नृपोऽम्बरीषः किञ्चिदपि न चचाल ॥ ४७ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

षत्वात् यत्र तत् दृशिभिर्नेत्राञ्जलिभिः पिबन्त्योऽपि न ततृपुः निमेषोन्मेषमात्रव्यवधानमप्यसहमानास्तत्कर्तुर्निमेः कुपिता बभूवुरिति निमेषासहत्वेन रूढमहाभावलक्षणेनात्र स्त्रियो गोप्य एव नान्याः नराः कृष्णप्रियनर्मसखास्सुबलादयः नान्ये ज्ञेयाः गोपीः प्रियनर्मसखांश्च विनारूढभावस्यान्यत्रोदयसम्भवाभावात् यदुक्तमुज्ज्वलनीलमणौ—

"आद्या प्रेमान्तिका तत्रानुरागा तां समञ्जसा।
रतिर्भावान्तिमां सीमां समर्थैव प्रपद्यते॥
रतिर्नर्मवयस्यानामनुरागान्तिमां स्थितिम्।
तेष्वेव सुबलादीनां भावान्तामेव गच्छति"

इति॥ ६५॥

अथ के ते जन्मकर्मणी इत्यपेक्षायां सर्वमेव युगपत्स्फुरितं तच्चरितमापाततो निजोत्कण्ठाकुण्ठनेच्छया राजोत्कण्ठावर्द्धनेच्छया च समासेन वर्णयति—जात इति द्वाभ्याम्। पितुर्वसुदेवस्य गृहात् व्रजं गतः किमर्थम् एधितः प्रकटीकृत्य वर्द्धितः वृद्धिसीमां प्रापितोऽर्थः सर्वपुरुषार्थशिरोमणिः प्रेमा येन सः प्रेमप्रख्यापनस्यैवावतारमुख्यप्रयोजनत्वात् प्रेम्णश्च व्रज एव वृद्धिसीमाप्राप्तत्वाच्च रिपून् हत्वेति रिपुभ्यो मोक्षप्रदानमप्येकं प्रयोजनमिति तेषु दारेषु सुतशतान्युत्पाद्येत्याविना वर्णाश्रमधर्मस्थापनं च दर्शितं नराकृतिपरब्रह्मत्वात् पुरुषः आत्मानं समीजे इज्यमानस्यान्यस्याभावात् किमर्थं समीजे तत्राह—आत्मनिगमम् आत्मानुगतं स्वकीयं वेदमार्गम्॥ ६६॥

भूभारहरणं प्रयोजनमाह—पृथ्व्या इति। भूपचम्वः भूपचमूः दृष्ट्यैव विधूय तत्प्रयोजनमाह, विजये अर्जुने जयम् उत्कर्षेण विघोष्य अर्जुनेन जितमिति जनेषु ख्यापयित्वेत्यर्थः। भक्तिज्ञानवैराग्यप्रख्यापनमप्येकं प्रयोजनं तदाह—प्रोच्येति। स्वधाम द्वारकां समगात् सङ्गतः प्राप्तो अभूत् प्रपञ्चगोचरतां परित्यज्येति भावः नारायणस्वरूपेण स्वधाम वैकुण्ठं चागात्॥ ६७॥

इति सारार्थदर्शिन्यां हर्षिण्याम् भक्तचेतसाम्।
नवमस्य चतुर्विंशः सङ्गतः सङ्गतः सताम्॥ २४॥
मन्तुसिन्धौ निमज्जन्तमन्तः सन्तापसन्धितम्।
करुणादृष्टि वृष्ट्यैव सन्तःकर्षन्तु मां ततः॥
वैयासशुक्रपञ्चभ्यां राधाकृष्णसरस्तटे।
नवमस्कन्धटीकेयमवाप परिपूर्णताम्॥
नवमस्कन्धीय टीक श्लोकाङ्का ( ६५० )
ओंनमो भगवते वासुदेवाय।
श्रीगोपालो विजयते॥
समाप्तोऽयं नवमस्कन्धः॥ ९॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यस्याननं दृशिभिः पिबन्त्यो नार्यो नराश्च पिबन्तः न ततृपुः स नृलोकं रमयामासेति पूर्वेणान्वयः, कथम्भूताः? दृङ्निमेषोन्मेषकर्तुर्निमेः तं प्रति कुपिताः दृङ्निमेषोन्मेषव्यवधानमप्यसहमाना इत्यर्थः। तद्दर्शनसुखेन मुदिताश्च कीदृशमाननं मकरकुण्डलाभ्यां चारू कर्णौ भ्राजन्तौ कपोलौ च तैः सुभगं सविलासो हासो यस्मिन् नित्यमुत्सवो यस्मिंस्तत्॥ ६५॥

भगवच्चरितं सङ्क्षेपतो वर्णयति—जात इति, श्लोकद्वयेन। पुरुषः "पुरुषान्न परं किञ्चित्" इत्यादिश्रुतिवेद्यः परमेश्वरो जातः स्वेच्छया निजरूपेण वसुदेवगृहे आविर्बभूव तस्माद्व्रजं नन्दव्रजं गतः तत्र भक्तानामेधिता अर्थाः पुरुषार्था येन सः रिपून् हत्वा कृतोरुदारः तेषु दारेषु पुत्रानुत्पाद्य आत्मनिगमं वेदमार्गं जनेषु प्रथयन् आत्मानमीजे॥ ६६॥

कुरूणां दुर्योधनभीमादीनामन्तःसमुत्थेन कलिना हेतुभूतेन पृथ्व्याः उरुभरं क्षपयन् युधि भूपचम्वः दृष्ट्या विधूय विजये अर्जुने जयं विघुष्य परं तत्त्वं पूर्वमर्जुनाय युद्धारम्भे उद्धवाय च स्वधामारोहणवेलायामुपादिश्य सम्यक्केनैव रूपेण स्वधाम निजं लोकं जगाम॥ ६७॥

इति श्रीसनकसम्प्रदायप्रवर्तकाचार्य-
श्रीभगवन्निम्बार्कचरणचिन्तकशुकसुधीप्रणीते
श्रीमद्भागवतसिद्धान्तप्रदीपे नवमस्कन्धीये
चतुर्विंशाध्यायार्थप्रकाशः॥ २४॥
समाप्तोऽयं नवमस्कन्धः॥ ९॥

---

भाषा टीका।

पहिले जो कही कि—सर्वांग सुंदर मूर्त्ति से लोक को रमाते भये सो अब उस सर्वांग सौंदर्य के उपलक्षक ( जानने वाली ) आपके श्री मुखकी शोभा का कुछ वर्णन करते हैं। कैसा आप का आनन ( मुख ) है, कि—मकराकृत कुंडलों से शोभा वाले सुन्दर कर्ण और कुंडलों की झलकन से शोभायमान सुन्दर कपोल जिसमें, और बहुत ही सुन्दर सौभाग्य युक्त विलास पूर्वक मन्दहास जिसमें, और दर्शन करने वालों को नित्य उत्सव जिसमें, ऐसे सौन्दर्य, सौकुमार्य, माधुर्य, मंदहास विलासादि विशिष्ट श्री मुखारविन्द को नारी और नर नेत्रों से सदा पान करते हुए भी तृप्ति को नहीं प्राप्त होते हुए, और दर्शन करके बडे मोद को प्राप्त होते। परंच जब बीच में दर्शन के विरोधी पलक आडे आजाते तब तो निमि राजा पर बडे कुपित होते और सदा ही चाहते, कि—पलक न लगें और सदा इस मुखको निरखते ही रहैं॥ ६५॥

अब उस मुखकमल के ध्यान को शुकदेवजी के हृदय में आने से, एक विषयक ज्ञान अपने दूसरे सम्बन्धिका स्मरण करा देता है। सो श्रीविग्रह के ध्यान से समग्र लीलाओं का स्मरण हो आया, इसी से संक्षेप से दो श्लोकों में श्री कृष्ण चरित्रों का वर्णन् करते हैं। श्रीमथुरा में श्रीवसुदेव की पत्नी श्रीदेवकी देवी में अपने परत्व सूचक निज रूप से प्रकट होकर फिर अपने पिता के गृह से नन्द के व्रज को गये, और वहां जाकर व्रज वासियों के सब अर्थ वढाये और अपने [ आश्रितों के ] शत्रुओं का नाश कर द्वारका में श्रीरुक्मिणी प्रभृति बहुत राजकन्याओं के साथ विवाह कर बहुत सी पत्नी बनाई। और उनके विषे सैकडों पुत्रों को उत्पादन कर, अपने वेदमार्ग को इस जगत् में प्रख्यात करने

भाषा टीका ।

के लिये अखिलेश्वर होकर भी आप अपने आत्मा ही को यज्ञों से यजन करते हुए ॥ ६६ ॥

और पृथिवी के बडे भारी भार को उतारने के लिये कौरवन के विषै कलह रूप अग्नि को प्रकट करा कर युद्ध के विषै आये हुए राजा लोगों की सेनाओं को अपनी दृष्टि से विधूनन कर के अर्जुन की जीतका डङ्का वजवा कर उद्धव को अपने परम तत्त्व का उपदेश कर अपने परम पद नित्य निजधाम को पधारे ॥ ६७ ॥

नवमस्कन्धभावार्थबोधिनी भक्तिपोषिणी ।
भाषाभागवताचार्यकृता भूयात् सतां मुदे ॥ १ ॥
इति श्रीमद्भागवत नवमस्कन्ध में चतुर्विंश अध्याय की,
उभयवेदान्ताचार्य—श्रीमत्सुदर्शनाचार्यान्तेवासि-
श्रीबलरामस्वामिचरणाश्रित-
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्त ॥ २४ ॥
नवमस्कन्ध भी समाप्त भया, ॥ ९ ॥
श्रीरुक्मिणीरमणो जयति ।

---

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

समाप्तोऽयं नवमस्कन्धः ॥ ९ ॥

॥ हरि ओम् तत् सत् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

संशोधकौचास्य ग्रन्थरत्नस्य काञ्चीमण्डलान्तर्वर्ति 'कान्दूर' पं० श्रीरङ्गाचार्य—'श्रीवृन्दावनस्थ' पं० भागवताचार्यौ ॥